क.

श्रीगणेशायनमः

॥ अथव्रतोद्यापनकौमुद्यनुक्रमणिका लिख्यते ॥

णांमयापूजांगृहाणसुरसत्तम सहस्रशीर्षेत्यावाहनम् नानारत्नसमायुक्तं कार्तस्वरविभूषितम् आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यताम् पु
रुषएवेदमासनम् पाद्यंगृहाणदेवेशसर्वक्षेमकरप्रभो भक्त्यासमर्पितंदेवलोकनाथनमोस्तुते एतावानस्येतिपाद्यं नमस्तेदेवदेवेशनमस्तेध
रणीधर नमस्तेजगदाधारअर्घ्यंनःप्रतिगृह्यता त्रिपादूर्ध्वमित्यर्घ्यं कर्पूरवासितंतोयंमंदाकिन्याःसमाहृतम् आचम्यतांजगन्नाथम-
यादत्तंहिभक्तितः तस्माद्विरा० आचमनीयं० शर्करारससंयुक्तं पयोदधिघृतंमधु पंचामृतंमयानीतंस्नानार्थंप्रतिगृह्यताम् पंचामृत-
स्नानं० आप्यायस्वेतिपयःस्नानं० दधिक्राव्णइतिदधिस्नानं० घृतंमिमिक्षइतिघृतस्नानं मधुवातेतिमधुस्नानं स्वादुःपवस्वेतिशर्करा-
स्नानम् आपोहिष्ठेति शुद्धोदकेनसंस्नाप्य पंचोपचारैःसंपूज्यमहाभिषेकंकुर्यात् गंगाचयमुनाचैवनर्मदाचसरस्वती तापीपयोष्णीकृ-
ष्णाचताभ्यःस्नानार्थमाहृतम् तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यताम् यत्पुरुषेणेतिस्नानं रुद्रेणपुरुषसूक्तेनश्रीसूक्तेनचतत्तद्देवताप्रका
शकसूक्तेनमंत्रेणमूलमंत्रेणवामहा भिषेकंकुर्यात् सर्वभूषाधिकेदेवलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् तंयज्ञमि
तिवस्त्रं देवदेवनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम् तस्माद्यज्ञात्सर्वहुतःसंभृतमितियज्ञोपवीतम् श्रीखंडंचं
दनंदिव्यंगंधाढ्यंसुमनोहरम् विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहुतःऋचः० गंधं माल्यादीनिसुगंधीनिमालत्यादीनिवैप्र-
भो मयाहृतानिपुष्पाणिप्रीत्यर्थंप्रतिगृह्यताम् तस्मादश्वेतिपुष्पं वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम्
यत्पुरुषंव्यदधुरितिधूपं साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ब्राह्मणोस्येतिदीपम् अन्नंचतुर्विधंस्वादु

सीनोदर्भान्धारयमाणः देवब्राह्मणवंदनपुरःसरंसपत्नीकः प्रधानसंकल्पंकुर्यात् तद्यथा देशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकं धर्मार्थका
ममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपर० अमुककामनयावामयाचरितं शुक्लैकादशीव्रतंतथाकृष्णैकादशीव्रतं तत्संपूर्णफलावाप्तये शुक्लकृ
ष्णैकादशीव्रतोद्यापनंकर्मकरि० पृथक्पृथग्वाशुक्लकृष्णैकादश्योः संकल्पःकार्यः पित्रादीनांचेत्तर्हितेषाम्नूहःकार्यः नटगाविहितंगणेशपूजन-
पुण्याहवाचनंमातृकापूजनंनांदीश्राद्धं आचार्यब्रह्मसदस्यर्त्विक्वरणंकरिष्ये इतिसंकल्प्य स्वगृह्यविधिनाकुर्यात् केचनगणेशपूजनपूर्वकंपुण्या
हवाचनमेवेच्छंति आचार्यवरणं यजमानःस्वगोत्राद्युच्चार्य अमुकगोत्रंअमुकशर्माणंब्राह्मणंएकादशीव्रतोद्यापनाख्येकर्मणि विहितंकर्मकर्तुंआ
चार्यंत्वामहंवृणे वृतोऽस्मीतिप्रतिब्रूयात् आचार्यस्तुयथास्वर्गेशक्रादीनां बृहस्पतिः तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत इतिप्रार्थ्य मधुपर्का-
दिनापूजयेत् संक्षेपेणवा ततः पूर्ववद्ब्रह्माणंवृत्वा यथाचतुर्मुखोब्रह्मासर्ववेदविशारदः तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम इतिसंप्रार्थ्य पूर्वव-
त्पूजयेत् ततःसदस्यं त्वन्नोगुरुः पितामातात्वंप्रभुस्त्वंपरायणम् आपद्विमोक्षणार्थायसदस्यंत्वामहंवृणे वृत्वापूर्ववत्पूजयेत् ततःऋत्वि
जं भगवन्सर्वकर्मज्ञसर्वधर्मभृतांवर वितते ममयज्ञेस्मिन्नृत्विक्त्वंभवसुव्रत वृत्वापूर्ववत्पूजयेत् प्रार्थयेच्च अस्ययागस्यनिष्पत्तौ भवंतो
भ्यर्थितामया सुप्रसन्नैश्चकर्तव्यंकर्मेदंविधिपूर्वकमिति ततआचार्यःसंकल्पंकृत्वापूजासामग्रीं गृहीत्वायजनदेशंगत्वा पूर्वोक्तप्रकारेणसर्वतोभ
द्रंब्रह्मादिदेवताः आवाह्यसंपूज्यतदुपरिअक्षतपुंजेकेशवादिद्वादशनामांकितंअक्षतपूर्णंताम्रमयंतंडुलपूर्णराजतपूर्णपात्रसहितं कलशंप्रतिष्ठा
प्य तत्रअष्टदलपद्मेदेवताआवाहयेत् तद्यथा प्रणवस्यपरब्रह्मऋषिः परमात्मादेवता देवीगायत्रीछंदः व्याहृतीनांक्रमेणजमदग्निभर-

हाजभृगवऋषयः अग्निर्वायुः सूर्योदेवताःदेवीगायत्रीदेव्युष्णिक् देवीबृहत्यश्छंदांसि पुरुषावाहने विनियोगः तत्रकर्णिकायाम् भूःपु
रुषंआवाहयामि भुवःपुरुषंआ० स्वःपुरुषंआ० भूर्भुवःस्वः पुरुषंआ० ततःसुवर्णप्रतिमायां सहस्रशीर्षानारायणः पुरुषोनुष्टुप् पुरु-
षावाह० सहस्रशीर्षा० लक्ष्मीयुतपुरुषमध्ये आवाहयामि इत्यावाह्य ततः परितः अग्निं० इंद्रं० प्रजापतिं० विश्वान्देवान्० ब्रह्मार्णं० व-
१० रामं० श्रियं० नाममंत्रेणआवाह्य ततःपूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेषु स्त्रीचतुःसहस्रसहितांरुक्मिणीं १ स्त्रीचतुःसह-
स्रसहितांसत्यभामां २ स्त्रीचतुःसहस्रसहितांजांबवतीं० ३ स्त्रीचतुःसहस्रसहितांकालिंदीं चावाह्य ततःआग्नेयादिकोणेषु शंखं० चक्रं० गदां०
०३ :साम ध्वनिशरीरस्थं वाहनंपरमेष्ठिनः विषपापहरोनित्यम तः शांतिं प्रयच्छमेइति गरुडंआवाह्य परितः पूर्वादिक्रमेण
तत्तन्मंत्रैर्नाममंत्रैर्वाआवाह्य तदस्तु मित्रावरुणा० गृह्णावेप्रतिष्ठास्तु० इति प्रतिष्ठाप्य पूर्वोक्तप्रकारेणपूजयेत् पुष्पान्
तरंअंगपूजांकुर्यात् :पादौपू० एवंसर्वत्र माधवायनमः जानुनीपू० कामपतये० गुह्यंपू० वामनाय० कटिंपू० पद्मनाभा० नाभिं
० विश्वमूर्तये० उदरंपू० ज्ञानगम्याय० हृदयंपू० श्रीकंठायन० कंठंपू० सहस्रबाहवे० बाहूपू० योगिनेन० चक्षुषीपू० उरगाय० ललाटंपू० नाकसु
० नासांपू० श्रवणेशाय० श्रवणौपू० सर्वकामदाय० शिखांपू० सहस्रशीर्षे० शिरःपू० सर्वरूपिणे० सर्वांगंपू० धूपदीपनैवेद्यांश्चच
त्संख्यान् दद्यादनुक्रमात् भक्त्याचतुर्विंशतिषु तिथिष्वपिपरंतप इच्छयाचनदाद्द्याद्देवोद्यापनंभवेत् मोदकान् लड्डुकान्वापिघृ १
मंडकान् साहोलिकादिकं सारसेवा सक्तुफलानिच वटकान्पायसंदुग्धं शालिदध्योदनंतथा इंडीरिकाः पूरिकाश्च अपूपान्गुडमोदकान्

१ घारगेइति प्रसिद्धाः २ मांडे इतिप्र० ३ शेवयाइतिप्र० आदिशब्देन बोटवे घावने इत्यादिप्रसिद्धानांसंग्रहः ४ वडेइतिप्र० ५ जिलब्याइतिप्र० ६ पुऱ्याइ०प्र० ७ अनरसेइ०प्र०

तिलपिष्टं खंडपिष्टं लाजदुग्धंसशर्करम् रंभाफलंचसघृतं मुद्गंचूर्णंगुडोदनम् एवंक्रमेणनैवेद्यंदद्याद्देवस्यतुष्टये नमस्कारोत्तरं विशेषार्घ्यंदद्यात्
तैजसपात्रेजलंनारीकेलंबीजपूरंअक्षतान् पुष्पचंदनादिफलंहिरण्यंनिक्षिप्य जानुभ्यांधरणींगत्वा इमंमंत्रमुदीरयेत् नारायणजगन्नाथलक्ष्मीकां
तदयानिधे गृहाणार्घ्यंमयादत्तंव्रतसंपूर्तिहेतवेइति मूलमंत्रेणपूजयेदितिवा ततःब्राह्मणान्संपूज्य गीतशास्त्रपुराणकथाश्रवणादिनाजागर
पूर्वकंरात्रिंनिनयेत् ततःप्रातःआचार्येःनित्यकर्मनिवर्त्यमंडलदेवताःपंचोपचारैःसंपूज्यहोममारभेत् तद्यथादेशकालौसंकीर्त्य शुक्लैकादशीव्र
तोद्यापनांगभूतंविहितं हवनंकरिष्येइतिसंकल्प्य समचतुरस्रमरत्निमात्रंहोमानुसारेणअधिकंवाचतुरंगुलोत्सेधंसन्मृदास्थंडिलंविधायतत्रय-
जमानशाखयोक्तभावेऋग्वेदशाखयावा अग्निप्रणयनादिकं विदध्यात् तदुक्तंमानवसंहितायाम् कर्तुः शाखोक्तमार्गेण आचार्यस्याथवापु
नः कुर्यादग्निप्रणयनंहवनादिविधिस्तथा ततःअन्वादध्यात् तद्यथा एकादशीव्रतोद्यापनहवनेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये इतिसंक
ल्प्य अग्नेइहएहीत्यादियजुःशाखिनाम् अस्मिन्नन्वाहितेग्नौजातवेदसमित्यारभ्यचक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानम् पुरुषंपुरुषसूक्ते-
नप्रत्यृचंआज्येनअमुकावृत्तिसंख्यया अग्निंइंद्रंप्रजापतिंविश्वान्देवान्ब्रम्हाणंचाज्येन एकवारंवसुदेवंरामंश्रियंविष्णुंराममंत्रेणघृताक्तपायस
द्रव्येणएकवारंपुनः विष्णुंविष्णोर्नुकमितिषण्मंत्रैः प्रत्यृचंघृताक्तपायसद्रव्येण अग्निंवायुंसूर्यंप्रजापतिंचएकवारं घृताक्तपायसद्रव्येणकेशवादि
दामोदरांतद्वादशदेवताः नाममंत्रैः एकवारंपायसद्रव्येणस्त्रीचतुःसहस्रसहितांरुक्मिणीं स्त्रीचतुःसहस्रसहितांसत्यभामां स्त्रीचतुःसह-
स्रसहितांजांबवतीं स्त्रीचतुःसहस्रसहितांकालिंदीं शंखंचक्रंगदांपद्मंगरुडंइंद्रादयष्टौलोकपालान्ब्रम्हादिमंडलदेवताश्च एकैकया आज्याहुत्या

१ऋग्वेद इतिम० २ मातुलिंगं

यस्ये शेषेणस्विष्टकृतमित्यादि पयसिस्थालीपाकविधिनाचरुं श्रपयित्वा पवित्रंतेविततमितिप्रापणसुद्धरेत् आज्यभागांतं कृत्वा प्रधानदेव-
ताहोमयेत् सहस्रशीर्षा॰ १६ अग्नये॰ इंद्राय॰ प्रजापतये॰ विश्वेभ्योदेवेभ्यः॰ ब्रह्मणे॰इत्याज्येन अथघृताक्तपायसेन वसुदेवाय॰ रामाय॰
श्रियै॰ विष्णवे॰ विष्णोर्नुकं॰ तदस्यप्रियं॰ प्रतद्विष्णुरितितिसृणांदीर्घतमाविष्णुस्त्रिष्टुप् हवनेविनियोगः विष्णोर्नुकं॰ तदस्यप्रियं॰ प्रतद्विष्णु॰
परोमात्रयाविचक्रमे त्रिर्देवइतितिसृणांवसिष्ठोविष्णुस्त्रिष्टुप् हवनेविनियोगः परोमात्रया॰ विचक्रमे॰ त्रिर्देवाः भूः स्वाहा॰ भुवः स्वाहा॰ स्वः स्वाहा॰
भूर्भुवस्वः स्वाहा॰ अथकेवलंपायसेन ॐ केशवायनमः स्वाहा प्रणवः स्वाहाकारश्च सर्वत्र नारायणाय॰ माधवाय॰ गोविंदाय॰ विष्णवे॰ मधुसू
नाय॰ त्रिविक्रमाय॰ वामनाय॰ श्रीधराय॰ हृषीकेशाय॰ पद्मनाभाय॰ दामोदराय॰ अथकेवलाज्येन स्त्रीचतुः सहस्रस॰ रुक्मिण्यै॰ स्त्री
चतुःसहस्र॰ सत्यभामायै॰ स्त्रीचतुःसहस्र॰ जांबवत्यैनमः स्त्रीचतुःसहस्रसहितायै कालिंद्यैनमः शंखाय॰ चक्रा॰ गदायै॰ पद्माय॰ गरु
डा॰ रुद्रा॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ तत्तन्मंत्रैर्वाहुत्वा ततः ब्रम्हादिमंडलदेवताः तत्तन्मंत्रेर्नाम
मंत्रैर्वाकेवलाज्येनहोमयेत् ॐ ब्रम्हणेनमः स्वाहा॰ इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ अष्टवसु-
भ्यो॰ एकादशरुद्रेभ्यो॰ द्वादशादित्येभ्यो॰ मरुद्भ्यो॰ विश्वेभ्योदेवेभ्यो॰ साध्येभ्योदेवेभ्यो॰ अश्विभ्यां॰ स्कंदाय॰ विष्णवे॰ गणपतये॰ पितृ
भ्यो॰ गंधर्वाप्सरोभ्यो॰ सप्तमातृभ्यो॰ सर्पेभ्यो॰ दुर्गायै॰ गंगादिनदीभ्यो॰ दक्षाय॰ नारायणाय॰ दुर्गायै॰ स्वधायै॰ मृत्यवे॰ शेषाय॰ समुद्रे- १
भ्यो॰ मरुद्भ्यो॰ गणपतये॰ पृथिव्यै॰ मेरवे॰ ऋग्वेदाय॰ यजुर्वेदाय॰ सामवेदाय॰ अथर्ववेदाय॰ वज्राय॰ शक्त्यै॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰

गदायै० त्रिशूलाय० ऐरावताय० मेषाय० महिषाय० प्रेताय० मकराय० गणाय० शिबिकायै० वृषाय० गौतमाय० भरद्वाजाय० विश्वामि० कश्यपा० जमद-
ग्नये० अत्रये० वसिष्ठाय० अरुंधत्यै० सूर्याय० सोमाय० भौमाय० बुधाय० गुरवे० शुक्राय० शनैश्चराय० राहवे० केतवे० ऐंद्र्यै० कौमार्यै० ब्राह्म्यै० वा-
राह्यै० चामुंडायै० वैष्णव्यै० माहेश्वर्यै० वैनायक्यै० ततः स्विष्टकृतं ततो यजमानः देवाय प्रापणं निवेदयेत् अनेन मंत्रेण त्वामेकमाद्यं पुरुषं पु-
राणं नारायणं विश्वसृजं भजामः त्वय्येष भागो विहितो विधेयो गृहाण हव्यं जगतामधीश इति निवेद्य तिष्ठेत् ततः अग्निं त्रिवारं चतुर्वारं वा प्रद-
क्षिणीकृत्याभिधि विश्वा अप द्विष इति धरण्यां जानुनी निपात्य ध्रुवसूक्तं पुरुषसूक्तं च जप्त्वा अष्टौ पदानि प्रति दिशं गच्छेत् एभिर्मंत्रैः कृष्णाय
वासुदेवाय हरये परमात्मने शरण्यायाप्रमेयाय गोविंदाय नमो नमः नमः स्थूलाय सूक्ष्माय व्यापकाव्यापकाय च अनंताय जगद्धात्रे ब्रह्मणेऽनंतमूर्तये
अव्यक्तायाऽखिलेशाय चिद्रूपाय गुणात्मने नमो मूर्ताय सिद्धाय पराय परमात्मने देवदेवाय वंद्याय पराय परमेष्ठिने कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते न-
मः अथ देवाय निवेदितं प्रापणं आनीय मूर्ध्नि कृत्वा घोषयेत् के वैष्णवाः के वैष्णवाः के वैष्णवाः इति उच्चैर्वदेत् ततः समानाः प्रतिवदेयुः वयं वैष्णवाः
वयं वैष्णवाः इति ततस्तेभ्यः समानेभ्यो हविर्दत्वा स्वयं ॐ नमो भगवते वासुदेवायेति मंत्रेण इदं अमृतं अहं प्राश्नामि इति प्राश्य आचम्य प्राणानाय-
म्य यजमानः आचार्यो वा सिद्ध्यै स्वाहेति अग्नौ आज्यं जुहुयात् ततः यत इंद्र भयामहे इत्यनेन आत्मानं अभिमंत्रयेत् ततः आचार्यः शुल्बहर-
णं कृत्वा प्रायश्चित्तादि होमशेषं समापयेत् ततः यजमानो स्तिथ्यादि संकीर्त्य कृतस्य एकादशीव्रतोद्यापनस्य सांगता सिद्ध्यर्थं आचार्यादीन्
वस्त्र तांबूल दक्षिणादिभिः पूजयिष्ये इति संकल्प्य विध्युक्तप्रकारेण संपूज्य दक्षिणादिभिः प्रतोष्य आचार्याय धेनुं सवत्सां सालंकारां गां दद्या-

तद्यथा यजमानः एकादशीव्रतोद्यापनपूर्तिकामः नारायणप्रीतये आचार्यायगोप्रदानमहंकरिष्ये इतिसंकल्प्य आचार्यं संपूज्य गोः पूजामार-
भेत् तद्यथा गोः पूजांकरिष्ये इतिसंकल्प्य गवामंगे आदौदेवतान्यासंकुर्यात् शृंगमूलयोः ब्रह्मविष्णुभ्यांनमः ब्रह्मविष्णून्यसामि एवमग्रेपि
ललाटे महादेवाय॰ नासावंशेषण्मुखाय॰ कर्णयोरश्विभ्यां॰ चक्षुषोः शशिभास्कराभ्यां॰ दंतेषुवायुभ्यो॰ जिह्वायांवरुणाय॰ हुंकारेसर-
च ॰ गंडयोः यमजाभ्यां॰ ओष्ठयोः संध्याद्वयाय॰ ग्रीवायांइंद्राय॰ कुक्षिदेशेरक्षोभ्यो॰ उरसिसाध्येभ्यो॰ चतुष्पादेषुधर्माय॰ खुरमध्येगंध
॰ खुरपार्श्वेषु॰ अप्सरः॰ पृष्ठेएकादश ॥ सर्वसंधिषुवसुभ्यो॰ श्रोणीतटेपितृभ्यो॰ लांगूलेषुसोमाय॰ बालेषु आदित्यरश्मिभ्यो॰ गो
गंगायै॰ क्षीरेसरस्वत्यै॰ दधिनर्मदायै॰ न ॰ मरोमसुदेवानां अष्टाविंशतिकोटिभ्यो॰ उदरेपृथिव्यै॰ पयोधरेषुचतुः
यो॰ ततःउपह्वयेइतिध्यायत् सौरभ वे धेनोपापनाशिनि गृहाणार्घ्यं मयादत्तं पाद्यं त्रैलोक्यवंदिते भूर्भुवः स्वः रुद्र
॰ सर्वदेवमयेदेविसर्वतीर्थमयेशुभे । नसौरभेयिनमोस्तुते अर्घ्यं दे हे स्थिता सिरुद्राणि शंकरस्यसदाप्रिये धेनुरूपेणसा
५८ आचमनीयं॰ : । धेनुरूपेणसादेवी ममपापंव्यपोहतु स्नानं॰ आच्छादनंगवेदद्यात्सम्यक्शुद्धं
सुशोभ॰ र अ वस्त्रं॰ रवडं धं॰ ततोलंकारान् शृंगभूषणार्थंसुवर्णम् चरणभूषार्थंरजतम् भालभूषार्थं
आदर्शम्॰ नेत्रभूषार्थंरत्नद्वयं॰ कंठभूषार्थंघंटां॰ पुष्पस्रजंच सर्वावयवभूषार्थं पट्टदुकूलं पृष्ठभूषार्थंताम्रम् पुच्छभूषार्थंमुक्ताफलस्रजम् कुं
कुमकर्पूरकस्तूरिकादिसुगंधद्रव्याणिसप्तधान्यानि घृतपूर्णकुंभान्परितः कल्पयेत् माल्यादीनीतिपुष्पं वनस्पतिरसोद्भूत इति धूपम् साज्यंच

षणादिद्वादशनामांकितान् कलशान् दद्यात् पीठं दत्वा सदन्नेन ब्राम्हणान्यथाविभवं संभोज्य दक्षिणादिभिः मनोब्धव्रतसंपूर्णतां वाचयित्वा आशि-
षो गृहीत्वा इष्टजनैः सह भुंजीत इति कृष्णैकादशीव्रतोद्यापनं समासम् इदंश्च कृष्णैकादशीव्रतोद्यापनं बोधायनस्मृत्यानुसारे पालिखितम् पुरा-
णोक्तं तु सर्वतोभद्रे ब्रह्मादिदेवतास्थापनपूर्वकं कलशं प्रतिष्ठाप्य तत्राष्टदलपद्मे सौवर्णघटितलक्ष्मीनारायणप्रतिमां इदं विष्णुरितिमंत्रेण प्रतिष्ठाप्य पु-
रतः राजतं गरुडं परितः लोकपालाष्टकं संस्थाप्य पुरुषसू० षोडशोपचारैः संपूज्य पुराणपठनादिना रात्रिं निनयेत् प्रातः अग्निं प्रतिष्ठाप्य कृत्वा इदं विष्णु-
रितिमंत्रेण घृताक्तपायसेन घृताक्ततिलैश्च प्रत्येकं अष्टोत्तरसहस्रं शतं हुत्वा कपिलां गां दत्वा चतुर्विंशतिब्राह्मणान् केशवादिनामभिः संपूज्य केशवादिना-
मांकितान् चतुर्विंशतिकलशान् पक्वान्नपूरितान् वस्त्रदक्षिणायुतान् दद्यादिति उद्यापनं तु प्रबोधिन्यां मार्गशीर्षे भीमैतिथौ माघे वैशाखे वित्तसमृद्धौ शुभ-
निधौ वा कुर्यात् इति पाद्मात् इति श्रीमच्छांकर्यव्रतोद्यापनकौमुद्यां एकादशीव्रतम् अथ प्रतिपद्व्रतानि लिख्यंते चैत्रप्रतिपदि आरोग्यव्रतम् भविष्ये न-
त्रसंवत्सरावसाने पंचदश्यां उपोषितः प्रतिपदि प्रातः स्नात्वा तिथ्यादि संकीर्त्य आत्मनः आरोग्यादिप्राप्तिकामनया सूर्यप्रीत्यर्थं आरोग्यप्रतिपद्व्रतं क-
रिष्य इति संकल्प्य पंचवर्णनिर्मितपद्मे भास्करं सांगं संपूज्य पायसाद्युपहारं निवेद्य सदन्नेन ब्राह्मणान् संतर्प्य दिनचतुर्थभागे स्वयं सघृतं एकमेव ग्रासं
भक्षयित्वा अवशिष्टान्नं त्यजेत् ब्राह्मणाननुमत्य वा घृतपूज्यं भुंजीत एवं त्रयोदशवर्षं कृत्वा उद्यापनप्रकारेण अंते सौवर्णीं सूर्यप्रतिमां संपूज्य ब्राम्ह-
णान् संभोज्य व्रतपूर्तये गां ब्राम्हणाय दद्यात् इति आरोग्यव्रतम् अथ विद्याव्रतं स्कांदे चैत्रशुक्लप्रतिपदि तिथ्यादि संकीर्त्य आत्मनः
सांगविद्याप्राप्तिकामो ब्रह्मप्रीत्यर्थं विद्याव्रतं करिष्ये इति संकल्प्य पंचवर्णरचिते अष्टपत्रपद्मे कर्णिकायाम् ब्रह्मजज्ञान-

१ एकादश्या

वर्तिसंयुक्त मितिदीपम् सुरभिस्त्वं जगन्मातर्देवि विष्णुपदे स्थिते सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस गोग्रासनैवेद्यं तांबूलं हिरण्यगर्भ० दक्षिणां
पंचगावः समुत्पन्ना मथ्यमाने महार्णवे तासां मध्ये तु या नंदा तस्यै देव्यै नमो नमः नमस्कारः गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः गावो मे हृदये नित्यं
गवां मध्ये वसाम्यहम् इति प्रदक्षिणीकुर्वन् प्रार्थयेत् उपह्वयेसुदुघामित्यादि वैदिकमन्त्रान् पठेत् ततो यजमानः सजलतिलकुशाक्षतं गोपुच्छं गृही
त्वा स्वगोत्रादि उच्चार्य आचार्यगोत्रादिकं उच्चार्य इमां गां सवत्सां यथाशक्ति भूषितां व्रतसंपूर्णतासिद्धि द्वारा श्रीमहाविष्णुप्रीत्यर्थं तुभ्यमहं संप्रददे इ
ति सतिलजलं तद्धस्ते निक्षिपेत् न मम इति त्यागं कुर्यात् ततः प्रतिगृहीता सावित्रेण यजुषा प्रतिगृह्य ॐ स्वस्तीत्युक्त्वा स्वस्वजातीयां कामस्तु इति पठे
त् गौस्तारयतु इत्यादि पठित्वा यज्ञसाधनभूता या विश्वस्याघौघनाशिनी विश्वरूपधरो देवः प्रीयतामनया गवा अनेन गोदानेन श्री महाविष्णुः प्री
यताम् ततो गोदानस्य सांगतासिद्ध्यर्थं हिरण्यं दद्यात् आगावो अग्मन्निति प्रदक्षिणां कुर्यात् इति गोदानं ततः यजमानः द्वादशसंख्याकान् ब्रा
ह्मणान् केशवादि द्वादशदेवतास्वरूपान् विभाव्य केशवादि द्वादशनामभिः यथाविभवं संपूज्य तेभ्यः पक्वान्नपूरितान् वस्त्रतांबूलदक्षिणादि सहिता
न् द्वादशकलशान् केशवादि द्वादशनामांकितान् दद्यात् तन्मंत्रः पक्वान्नपूरितं कुंभं दक्षिणावस्त्रसंयुतं ददामि द्विजवर्याय देवो नः प्रीयतामिति देवपदस्थाने के-
शवादिनाम्नां ऊहः कार्यः ततः पीठदानम् इदं पीठं सोपस्करं लक्ष्मीनारायणप्रतिमायुतं महाविष्णुप्रीतये तुभ्यमहं संप्रददे इति आचार्याय दद्यात् ततः आचा
र्यः उत्तिष्ठ ब्रह्मणस्पते इति पीठदेवताः उत्थाप्य पात्रांतरे उद्धृत कलशोदकेन सपत्नीकं यजमानं समुद्रज्येष्ठा इत्यादि वैदिकैर्मंत्रैः सुरास्त्वामित्यादि पौरा
णिकैर्मंत्रैः वैष्णवसूक्तैश्च अभिषिंचेत् ततः स्नातः यजमानः अग्निं संपूज्य यस्य स्मृत्या० मन्त्रहीनमिति क्षमाप्य अभ्यारमिदद्वयं० यान्तु देवगणाः सर्वे

क्ताः सिताः क्रमादिति अथ द्वादशलिंगतोभद्रम् लैंगे प्रागुदीच्यांगता रेखाः षट्त्रिंशद्धि प्रकल्पयेत् पदानि द्वादशशतं पंचविंशतिरेव च खं
डेंदुस्त्रिपदाः कोणे शृंखला षट्पदैः स्मृता त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः त्रयोदशपदा वापी लिंगमष्टादशैः स्मृतम् लिंगत्रयस्य पङ्क्तौ
तु शोभाकोष्ठाश्चतुर्दश तेषामुपरि पङ्क्तौ तु कोष्ठाः सप्तदशैव तु पूजापङ्क्तिस्तु विज्ञेया परितः परिकल्पिता पूजापङ्क्त्यन्तरा पङ्क्तौ कोष्ठा ह्यशीति सं
ख्यया परिधिः स तु विज्ञेयोऽन्तरा मंडलयोर्द्वयोः परिध्यन्तरकोष्ठेषु सर्वतोभद्रमालिखेत् विशेषश्चात्र विज्ञेयः शृंखला षट्पदा भवेत् त्रयोदशप-
दा वल्ली भद्रं तु नवभिः पदैः पञ्चविंशत्पदा वापी परिधिः षोडशात्मकः मध्ये नवपदं पद्मं कर्णिकाकेसरान्वितम् सत्वं रजस्तमो वर्णाः परितो मंड
लस्य तु त्रयः परिधयः कार्यास्तत्र द्वाराणि कारयेत् सितेंदुः शृंखला कृष्णा वल्ली नीला प्रकीर्तिता भद्रं चैवारुणं ज्ञेयं वापी स्याच्छुक्लवर्णिका
लिंगानि कृष्णवर्णानि पार्श्वतो द्वादशैव तु परिधिः पीतवर्णः स्यात्कमलं पंचवर्णकम् अथ चतुर्लिंगतोभद्रम् लैंगे रेखास्त्वष्टादश प्रोक्ताश्चतु
र्लिंगसमुद्भवे कोणेंदुः स्त्रिपदः श्वेतस्त्रिपदैः कृष्णशृंखला वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदं, भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः शि
वस्य पार्श्वतो वापीं कुर्यात्पंचपदां सितां एकपदं तथा पीतं भद्रवाप्योस्तु मध्यतः शिरसि शृंखलायाश्च कुर्यात्पीतं पदत्रयम् लिंगानां स्कंदतः
कोष्ठा विंशती रक्तवर्णकाः परिधिः पीतवर्णस्तु पदैः षोडशभिः स्मृतः पदैस्तु नवभिः पश्चाद्रक्तं पद्मं सकर्णिकं एकलिंगतोभद्रम् गौरीतिल
के तिर्यगूर्ध्वगता रेखाः कार्याः स्निग्धास्त्रयोदश कोणेंदुस्त्रिपदः कार्यः शृंखलास्त्रिपदाः स्मृताः वल्ली तु त्रिपदा नीला भद्रं रक्तं प्रक-
ल्पयेत् पदैर्द्वादशभिः स्पष्टमुत्तरे पूर्वदक्षिणे पश्चिमायां महारुद्रं अष्टाविंशति कोष्ठकैः लिंगपार्श्वे तथा मूर्ध्नि अष्टौ कोष्ठाः सुपीतकाः लिंगमेकं तथा

१ आरक्तम्

गौर्यास्तिस्वस्त्यरत्नमंडले पूजयेन्मंडलं चैतत्तस्य गौरी प्रसीदति अथमुद्राः तंत्रांतरे देवतानेनसंतुष्टासर्वदासंमुखीभवेत् अंगुष्ठौनिक्षिपे-
त्सेयंमुद्रात्वावाहनीमता संग्रथ्य निक्षिपेत्सेयंमुद्रात्वासनसंज्ञिका अधोमुखीस्थिथंचेत्स्यात्स्थापनीमुद्रिकामता उत्थितांगुष्ठिनौकुर्यात्सं-
मुखीकरणीभवेत् प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौतुसंमुखौ कुर्यात्स्वहृदयेसेयंमुद्राप्रार्थनसंज्ञिका इत्येवसर्वदेवानांपूजनेषट्प्रदर्शयेत्
शिवपूजायाम् लिंगमुद्रा उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् वामांगुलीर्दक्षिणाभिरंगुलीभिश्चवेष्टयेत् लिंगमुद्रेयमाख्याता शिवसान्नि
ध्यकारिणी श्रीकामःशीर्ष्णिकुर्वीतराज्यकामस्तुनेत्रयोः मुखेत्वन्नाद्यकामस्तु पादयोःस्तुवकामकृदिति ज्ञानमालायाम् नाक्षतैरर्चयेद्वि
ष्णुंनतुलस्यागणाधिपम् नदूर्वयापूजयेद्देवीनसूर्यंबिल्वपत्रकैः औन्मत्तमर्कपुष्पंचविष्णोर्वर्ज्यंसदाबुधैः अक्षतास्तुयवाःप्रोक्ताइति तंत्रांतरे
महाभिषेकसर्वत्रशंखेनैवप्रकल्पयेत् सर्वत्रैवप्रशस्तोयःशिवसूर्यार्चनंविनेति अथव्रतोद्यापनानुक्तौविधिः नंदीपुराणे कुर्यादुद्यापनंतु
स्यसमाप्तौयदुदीरितम् उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत् यत्रचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते
गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्तये गोःप्रत्यक्षा तन्मौल्यंवा गवांमौल्यंचनिष्कंस्यात्तदर्द्धंपादमेवच सुवर्णंरौप्यंवा उक्तोद्यापनेतु
आदौमध्येतथाचांतेव्रतस्योद्यापनंभवेदिति व्रतभंगेसंपूर्णताविधिः भविष्ये कृष्णउवाच किंचिद्व्रतंप्रमादेनयद्व्रतंव्रतिनांस्थित-
म् तत्संपूर्णंभवेत्सर्वंव्रतेनानेनपांडव यस्यव्रतस्ययोदेवस्तद्रूपंहेमनिर्मितम् द्विभुजंपंकजारूढंकार्यंप्रहसिताननम् स्नापयेत्पय
सादध्नाघृतेनक्षौद्ररसांबुभिः गंधचंदनपुष्पैश्चपूजांकुर्यात्समाहितः तोयपूर्णस्यकुंभस्यमुखेविन्यस्यदेवताम् धूपदीपाक्षतैर्वस्त्रैरत्नैर्बहु-

१ धत्तूरपुष्पम्

प्रकारकैः अर्घ्यंदद्याच्चतन्नाम्नामंत्रेणानेनपांडव उपवासस्यदानस्य प्रायश्चित्तंकृतंमया शरणं नः प्रपन्नांस्त्वं कुरुष्वाद्यदयांपुनः
प्रसन्नोभववभीतस्यभिन्नचर्यव्रतस्यच कुरुप्रसादंसंपूर्णंव्रतंसंजायतांमम यज्ञच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि तत्सर्वंत्वत्प्रसा
देन संपूर्णंजायतांमम पूर्वदक्षिणतः पश्चादुत्तरेचबलिंहरेत् उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्यो
नमोनमः पादौचजानुनीचैवकटिंशीर्षकवक्षसी कुक्षिंचहृदयंपृष्ठंवाचंचक्षुःशिरोरुहान् पूजयित्वास्यदेवस्यततःपश्चात्क्षमापयेत् पू-
जितस्त्वंयथाशक्त्यानमस्तेस्तुसुरोत्तम ऐहिकामुष्मिकींदेहिकार्यसिद्धिंममप्रभो एवंक्षमापयित्वातुदेवंविप्रायदापयेत् दानेपूर्वामुखोवि
प्रोदातान्चैवोत्तरामुखः इदंव्रतंमयाखंडंकृतमासीत्पुराद्विज तत्सर्वंपूर्णमेवास्तुतवमूर्तिप्रसादतः ब्राह्मणोपिप्रयच्छेत्तंमंत्रेणानेनते-
व्रतम् संपूर्णंस्यात्प्रसादेनदेवदेवस्यशार्ङ्गिणः ब्राह्मणायत्प्रभाषंतेतन्मन्यंतेदिवौकसः सर्वदेवमयाविप्रानतद्वचनमन्यथा व्यासवा-
ल्मीकिवचनात् पराशरवसिष्ठयोः गर्गगौतमधौम्यात्रिवसिष्ठांगिरसांतथा वचनान्नारदादीनां पूर्णंभवतुतेव्रतम् एवंविधिविधानेनगृ-
हीत्वाब्राह्मणोव्रजेत् ततः पंचमहायज्ञान्निर्वर्त्य भोजनादिकं एवंयःकुरुतेभक्त्याव्रतमेतन्नरोत्तम तस्यसंपूर्णतांयातिनद्वतूयत्पुराकृ
तम् खंडंसंपूर्णतांयातिप्रसन्नेव्रतदेवतइति अथाचार्यकृत्यम् व्रताचार्योदर्भेष्वासीनोदर्भान् धारयमाणः प्राणानायम्यदेशकालौ
संकीर्त्यामुकव्रतोद्यापनेयजमानेनवृतोहंआचार्यकर्मकरिष्ये गणपतिंसंपूज्य शरीरशुद्ध्यर्थंपवनंपावनंभूतशुद्ध्यादिपुरुषसूक्तन्यासांश्च
कुर्यात् उक्तरीत्यापवनपावनादिकृत्वापुरुषसूक्तन्यासान् आरभेत् तद्यथा सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनारायणऋषिः पुरुषोदेव
१गृहीयात्

४

ना॰ नुष्टुप्छंदः अंत्यास्त्रिष्टुप् न्यासादौ पूजायांचविनियोगः ॐ सहस्रशीर्षा॰ वामकराय॰ पुरुषए॰ दक्षिण॰ एतावान॰ वामपादाय॰
त्रिपाद॰ दक्षिणपादा॰ तस्मोद्वि॰ वामजानवे॰ यत्पुरुषे॰ दक्षिणजान॰ तंयज्ञं॰ वामकट्यै॰ तस्माद्य॰ दक्षिणकट्यै॰ तस्मा॰ ऋचः॰ नाभ्यै॰
तस्मादश्वा॰ हृदयाय यत्पुरुषं॰ कंठाय॰ ब्राम्हणोस्य॰ वामबाहवे॰ चंद्रमा॰ दक्षिणबा॰ नाभ्याआ॰ मुखाय॰ सप्तास्यासन्नेत्राभ्यां॰ यज्ञेनय॰
मूर्ध्ने अथपंचांगन्यासः ब्राम्हणो॰ हृदया॰ चंद्रमा॰ शिरसे॰ नाभ्याआ॰ शिखायै॰ सप्ता॰ कवचाय॰ यज्ञेनयज्ञ॰ अस्त्राय फट् ततः पु-
रुषसूक्तेनत्रिवारंव्यापकंकुर्यात् ततःयागभूमिंगत्वासर्वतःसर्षपान् विकिरेत् यदत्रसंस्थितंभूतमितिमंत्रद्वयेन ततःसाधितपंचगव्येनकुशैःसर्वत्र-
प्रोक्षणम् शुचीवोह॰ आपोहिष्ठेतितृचेनकार्यम् ततःकृतांजलिः स्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयंपठेत् देवाः आयांतुयातु धानाः अपगच्छंतुवि-
ष्णोदेवयजनंरक्षस्वेतिवदेत् ततःसर्वतोभद्रलिंगतोभद्रेवाब्रम्हादिदेवताः स्थापयेत् तद्यथा मध्ये ब्रम्हजज्ञानंगौतमोवामदेवोब्रम्हा त्रिष्टुप्
ब्रम्हावाहनेविनि॰ ॐ ब्रम्हजज्ञानं॰ ब्रम्हणेनमः ब्रम्हाणमावाहयामि एवंसर्वत्र मंडलाद्बहिः प्रागादिक्रमेणलोकेशान् पूर्वे त्रातारंग
र्गइंद्रस्त्रिष्टुप् इंद्रावाहनेविनियो॰ त्रातारमिंद्र॰ इंद्रमावाहयामि आग्नेय्यां अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री अग्न्यावाहनेविनि॰ अ
ग्निंदूतंवृणीमहे॰ अग्निं॰ दक्षिणस्यां॰ यमायसोमंयमोयमोऽनुष्टुप् यमावाह॰ यमायसोमं॰ यमं॰ नैर्ऋत्यां मोषुणोघोरः कण्वोनिर्ऋतिर्गा-
यत्री निर्ऋत्यावाहनेवि॰ मोषुणः परापरा॰ निर्ऋतिं॰ पश्चिमे॰ तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप् वरुणावाहने॰ तत्वाया॰ वरुणं॰ वायव्यां
वायोशतंगौतमोवायुरनुष्टुप् वाय्वावाहनेविनियो॰ वायोशतंहरीणां॰ वायुं॰ उत्तरे॰ आप्यायस्वराहूगणोगौतमः सोमोगायत्री सो-



अथव्रतोद्यापनकौमुदी प्रारंभः

श्रीगणेशायनमः श्रीगोपीजनवल्लभायनमः नत्वागणेशंसंतु ष्ट्यैशंकरेणवितन्यते सुदापुराणविख्यात व्रतोद्यापनकौमुदी १ तत्रतावत्स
र्वव्रतोपयोगित्वात्किंचिन्निर्णयादिकंलिख्यते अभियुक्तव्रतसिद्धिविषयःसंकल्पविशेषएवव्रतम् तत्रकालमाह हेमाद्रौगार्ग्यः अस्त-
गेचगुरौशुक्रे बालेवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारयेत् १ लल्लः नीचस्थेवक्रसंस्थेप्यतिचरणगतेबालवृद्धास्तगेवा नी
चस्थोमकरस्थः देवीपुराणे सिंहसंस्थेगुरौशुक्रेसर्वारंभंतुवर्जयेत् वसिष्ठः सिंहस्थेनुमघासंस्थंगुरुंयत्नेनवर्जयेत् सिंहस्थगुरुवर्जनं
नर्मदोत्तरभागएव अन्यत्रतुसिंहांशकएववर्ज्यः मकरस्थगुरावपिसर्वंशुभकार्यंवर्ज्यम् विशेषमाह लल्लः नर्मदापूर्वभागेतुशोणस्यो-
त्तरदक्षिणे गंडक्याःपश्चिमेभागेमकरस्थोनदोषभाक् १ अगस्त्योदयेपिव्रतानांग्रहणविसर्गौनिरस्तः नियतकालोनितुभवंत्येव अ
गस्त्योदयकालश्चदिवोदासीये उदेतियाम्यांहरिसंक्रमाद्रवेरेकाधिकेविंशतिमेत्यगस्त्यः सप्तसप्तमेस्तंवृषसंक्रमाच्च प्रयातिगर्गादिभिर
भ्यभाणि व्रतारंभसमाप्तितिथिंविशिनष्टि हेमाद्रौसत्यव्रतः उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक् साखंडानव्रतानांस्यादारंभश्चसमा
पनम् १ तद्व्यतिरिक्तायामखंडायांप्रारंभश्चसमापनम् संपूर्णांतिथिमाह रवियांतिथिसमुदेतिअस्तंयातिचसासंपूर्णा तत्तद्व्रतोक्तकाल
व्यापिनीवाग्राह्या व्यतीपातादिनिषिद्धयोगभद्रादुष्टवासरादिरहितातिथिः शुभकार्येग्राह्या ब्रह्मयामले दिनभद्रायदारात्रौरात्रिभद्रायदादि
वा नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाइति अथव्रताधिकारिणः स्कांदे निजवर्णाश्रमाचारनिरतःशुद्धमानसः अलुब्धःसत्यवादीचस
र्वभूतहितेरतः श्रद्धावान्पापभीरुश्चमददंभविवर्जितः अवेदनिंदकोधीमानधिकारीव्रतादिषु निजवर्णाश्रमाचारइत्यनेनचतुर्णांवर्णानामधिका
१इदमित्थंकर्तव्यमितिनिश्चितोयोनियमस्तत्सिद्धिविषयकइत्यर्थः २मलमासे

रोवगम्यते अतस्त्रीणामप्यधिकारः भारते मांहिपार्थव्यपाश्रित्ययेपिस्युःपापयोनयः स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिमिति
क्वचिन्म्लेछानामप्यधिकारः हेमाद्रौदेवीपुराणे ब्राह्मणैःक्षत्रियैर्वैश्यैः शूद्रैःस्त्रीभिर्महेश्वरः पूजनीयोभक्तिमद्भिम्लेछैरन्यैश्चमानवै-
रितिसभर्तृकास्त्रीणांभर्त्राज्ञांविनानाधिकारः तथाचमदनरत्नेमार्कंडेयपुराणे नारीनखल्वनुज्ञाताभर्त्रापित्रासुतेनच निष्फलंतुभवेत्तस्याय-
त्करोतिव्रतादिकमिति भर्त्राद्याज्ञयातुसर्वव्रतेष्वधिकारः स्त्रीणांव्रतग्रहणेविशेषोहेमाद्रौहरिवंशे स्नानंचकार्यंशिरसः स्नाताफलम-
वाप्नुयादिति अभर्तृकस्त्रीणामपिव्रतादिष्वधिकारः तदुक्तंस्कांदे भर्तृहीनातुयानारीसंयताविजितेंद्रिया व्रतादीनांतुसंकल्पंदानंच-
स्वयमाहरेत् वैदिकंतांत्रिकंकर्मआचार्यद्वारतश्चरेदिति अथव्रतधर्माः भारते गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृह्णीया-
द्वासंकल्पयेद्बुधः पात्राभावेहस्तेनापिजलंगृहीत्वासंकल्पयेदिति अनंतरकृत्यमाह मदनरत्नेदेवलः अभुक्त्वाप्रातराहारंस्नात्वाचम्य-
समाहितः सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् अत्रप्रातर्व्रतमाचरेदित्यथवान्वयः अन्येतुपूर्वदिनेएकभुक्तंनक्तंवाकृत्वासायंसंध्योत्तरं
व्रतंसंकल्पयेदित्याहुः सर्वव्रतेषुसामान्यधर्माः भविष्ये क्षमासत्यंदयादानंशौचमिंद्रियनिग्रहः देवपूजाग्निहवनंसंतोषःस्तेयवर्जनम् स
र्वव्रतेष्वयंधर्मःसामान्योदशधास्थितः देवलः ब्रह्मचर्यमहिंसाचसत्यमामिषवर्जनम् व्रतेष्वेतानिचत्वारिचरितव्यानिनित्यशः व्रताद्या
रंभेवृद्धिश्राद्धंकार्यम् तदाह शातातपः एतानिमातृपितृश्राद्धंकर्मकुर्यादनंतरमिति गृहीत्वाव्रतानाचरणेदोषमाह पूर्वंव्रतंगृहीत्वायो
नाचरेत्काममोहितः जीवन्भवतिचांडालोमृतश्चनरकंव्रजेदिति प्रायश्चित्तमुक्तंस्कांदे क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि दि० ७ पत्र.

यंनभुंजीतमुंडनंशिरसोथवा प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेदिति उपवासलक्षणमाह वसिष्ठः उपवासः सविज्ञेयःसर्वभोगविव-
र्जनमिति निराहारोपवासः उपवासेदंतधावनंकाष्ठेननिषिद्धं तदभावेद्वादशगंडूषान्कुर्यात् तदुक्तंवसिष्ठेन उपवासेतथाश्राद्धेनकुर्याद्दंत-
धावनम् तदभावेतुगंडूषान्कुर्याद्द्वादशचैवहि हारीतः पतितपाखंडिनास्तिकादिसंभाषणाऽश्लोकादिकमुपवासादिषुव्रतादिकेषु-
चवर्जयेदिति पतितादिदर्शनेतु विष्णुपुराणे तस्यावलोकनात्सूर्यंपश्येत् स्पर्शात्स्नानमाचरेत् अयुतंशुचिपदंजपेत् याज्ञवल्क्यः
यदिवाग्यमलोपःस्याद्व्रतदानक्रियादिषु व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुमव्ययम् यमः मानसेनियमेलुप्तेस्मरेद्विष्णुमनामयमि-
ति बृहन्नारदीये रजस्वलांचचांडालंमहापातकिनंतथा सूतिकांपतितंचैवउच्छिष्टंरजकादिकम् व्रतादिमध्येशृणुयाद्येषांध्वनि-
मुत्तमः अष्टोत्तरसहस्रंतुजपेद्वैवेदमातरमिति वेदमातागायत्री दक्षः संध्याहीनोशुचिर्नित्यमनर्हःसर्वकर्मसु गौडनिबंधेमार्कंडेयपु-
राणे सूर्योदयंविनानैवस्नानदानादिकःक्रमइति क्रमउपक्रमः छंदोगपरिशिष्टे सदोपवीतिनाभाव्यंसदाबद्धशिखेनचेति मार्कंडेय
पुराणे अधोवायुसमुत्सर्गेप्रहासेत्वन्यभाषणे मार्जारमूषकस्पर्शेआक्रुष्टेक्रोधसंभवे निमित्तेष्वेषुसर्वत्रकर्मकुर्वन्नपःस्पृशेत् मार्कंडे-
यपुराणे शिरःस्नातश्चकुर्वीतदैवपित्र्यमथाह्निकमिति वायुपुराणे स्नानसंध्यातर्पणादिजपहोमामरार्चनम् उपवासवताकार्यंसायंसं-
ध्याहुतीस्तथा आपस्तंबः त्रिमात्रस्तुप्रयोक्तव्यःकर्मारंभेषुसर्वशः त्रिमात्रःप्रणवः स्त्रीणांविशेषः पाद्मे गर्भिणीसूतिकादिश्चकुमारीचा-
पिरोगिणी यदाशुद्धातदान्येनकारयेत्प्रयतास्वयमिति पाद्मे पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः तत्कर्तव्यंनरैःशुद्धंदेवार्चनविवर्जितमिति केनका- २

१ विष्णोर्नाम २ वाङ्नियम ३ पश्येद्धतिशेषः ४ गृत्याग्निहोमः

रयेदित्यपेक्षायां पैठीनसिः भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतमिति वायुपुराणे उपवासेत्वशक्तस्तुपुत्रादन्यांश्चकारयेत् उपवासंप्रकुर्वाणः
पुण्यंशतगुणंभवेत् नारींचपतिमुद्दिश्य एकादश्यामुपोषिता पुण्यंशतगुणंप्रायादित्याहगालवोमुनिः मातामहादीनुद्दिश्य एकादश्यामुपोषणे
कृतेतुतेफलंविप्राःसमग्रंफलमाप्नुयुः एतेप्रतिनिधयोनकाम्ये मंडनः काम्येप्रतिनिधिर्नास्ति नित्येनैमित्तिकेभवेत् काम्येष्वुपक्रमादूर्ध्वंकेचित्प्र-
तिनिधिंविदुरिति हविष्याणि कात्यायनः हविष्येषुयवामुख्यास्तदनुव्रीहयःस्मृताः माषकोद्रवगौरादीन्सर्वाभावेपिवर्जयेत् अग्निपुराणे
व्रीहिषाष्टिकमुद्गाश्चमठेरःसलिलंपयः श्यामाकाश्चैवनीवारागोधूमाद्यावतेहिताः कदूसैंधवसामुद्रेगव्येचदधिसर्पिषी पयोनुद्धृतसारं
चपनसाम्रेहरीतकी पिप्पलीजीरकंचैवनागरंचैवतितिणी कदलीलवलीधात्रीफलान्यगुडमैक्षवम् अतैलपक्कंमुनयोहविष्याणिप्रचक्षते मनुः
मुन्यन्नानिपयःसोमोमासयच्चानुपस्कृतं अक्षारलवणंचैवप्रकृत्याहविरुच्यते अनुपस्कृतं अपक्कं उपयुक्तवस्तूनिव्रतादौलिख्यंते आदित्य
पुराणे स्ववर्णरजतंमुक्ताराजावर्तःप्रवालकम् पंचरत्नमाख्यातं कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं एतानिपंचरत्नानि कुलिशंही
रकम् स्मृत्यंतरे अभावेसर्वरत्नानांहेमसर्वत्रयोजयेदिति पल्लवाः ब्रह्मांडपुराणे अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवाः पंचगव्यं
स्कांदे गोमूत्रंगोमयंक्षीरंदधिसर्पिर्यथाक्रममिति पंचामृतंशिवधर्मे पंचामृतंदधिक्षीरंसितामधुघृतंनृपेति कात्यायनः आ-
ज्यंक्षीरंमधुतथा मधुरत्रयमुच्यतइति सर्वौषध्यः छंदोगपरिशिष्टे कुष्ठंमांसीहरिद्रेद्वेमुराशैलेयचंदनम् वचाचंपकमुस्तंचसर्वौषध्यो
दशस्मृताइतितत्रैवआपःक्षीरंकुशाग्राणिदध्यक्षततिलास्तथा यवाःसिद्धार्थकाश्चैवत्यर्घोष्टांगःप्रकीर्तितइति पंचरात्रे रजांसि पंच-

१ गौरी. प्रियंगव. २ लव्हेइतिभाषाप्रसिद्धा. ३ वाटाणेइतिप्रसिद्धा इतिव्रतराजेस्ति ४ चिंचा ५ रायआवळीइतिप्रसिद्धा ६ इक्षुविकार.शर्करादिः ७ पद्मराग

वर्णानिमंडलार्थंहिकारयेत् शालितंडुलजंशुक्लंरक्तंकौसुंभसेंदुरम् हरितालोद्भवंपीतंकृष्णंदग्धयवोद्भवम् रजांसिपंचवर्णानिहरितंपी-
कौतुकसंभवानिभविष्ये दूर्वायवांकुराश्चैवबालकंचूतपल्लवाः हरिद्राद्वयसिद्धार्थशिखिपिच्छोरगत्वचः कंकणौषधयश्चैवकौतु
कारव्योगुणःस्मृतइति सप्तमृदोमात्स्ये गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् मृदमानीयकुंभेषुप्रक्षिपेच्चत्वरादपि भविष्ये सुवर्णरजतं-
लोहंत्रपुस्तथासीसंधातवःसप्तकीर्तिताइति तत्रैवसप्तधान्यानि यवगोधूमधान्यानितिलाःकंगुस्तथैवच श्यामाकाश्च
धान्यमुदात्दतमिति. कल१ ६ ५ धर्मे हैमराजतताम्राश्चमृन्मयालक्षणान्विताः पंचाशांगुलवैपुल्याउत्सेधेषोडशांगु-
लाः : प्रतिमाद्रव्यं ततुप्रमाणंभविष्ये सौवर्णीराजतीताम्रीवृक्षजामार्तिकीतथा पिष्टजापिष्टले-
: आमाषात्पलपर्यंताकर्त्तव्याशाठ्यवर्जितैः अंगुष्ठपर्वादारभ्यवितस्त्यवधिकास्मृतेति मात्स्ये अनुक्तसंख्यायत्र-
अष्टाविंशतिरष्टौवायथाशक्तिविधीयतइति ब्राह्मे यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारियत् यवानामिवगोधूमाव्रीहीणामि-
वशालयः आज्यंद्रव्यमनुद्देशेसर्वहोमेविधीयतइति मंत्रदेवतायाअभावेप्रजापतिरितिस्थितिः समस्तव्याहृतिर्मंत्रः गारुडे प्रणवादिनेमोंतंचचतुर्थ्यां
देवतायाःस्वकंनाममूलमंत्रःप्रकीर्तितइति द्रव्यप्रतिनिधिरुक्तोहेमाद्रौ दध्यलाभेपयःकार्यंमध्वालाभेतथागुडः धृतहोमेगव्यंमुख्यंत
तदभावेतैलकौसुंभंसार्षपंचेति कात्यायनः अनंतगर्भंकुसाग्रंकौशंद्विदलमेवच प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकु-
ध्मा पलाशाश्वत्थखदिररोहितोदुंबराणां तदभावेकंटकवर्ज्यंसर्ववनस्पतीनाम् समिन्द्धौहोतव्य मंदाभावाभयावीस्या
१वाळाइतिविख्यातः २ सर्षपाः ३मोरवैलइतिख्याता ४ दालचिनीइतिख्याता ५पित्तलम्

दित्यादिदोषदर्शनात् नकुर्यादग्निधमनंपाणिशूर्पादिभिःक्वचित् मुखेनैवधमेदग्निंयतोवेदाविनिःसृताइति अथधूपःभविष्ये अगरुंचंदनं
मुस्तासिल्हकंवृषणंतथा समभागंतुकर्तव्यंधूपोयममृताव्हयः वृषणंकस्तूरी स्रुवर्णादिमानंपंचगुंजात्मकोमाषः तेषोडशकर्षः कर्षचतुष्ट-
यपलं अन्यदूपिपलद्वयंप्रसृतस्ताद्विगुणंकुडवंतच्चतुर्गुणंप्रस्थः तच्चतुर्गुणमाढकः तच्चतुर्गुणंद्रोणाः पलंचकुडवःप्रस्थआढकोद्रोणएवच
धान्यमानेषुबोद्धव्याःक्रमशोमीचतुर्गुणाः धान्यमानंद्रोणद्वयंकुंभःषोडशद्रोणा खारीति होमद्रव्यमानंपदार्थादर्शे कर्षप्रमाणमाज्यंस्या-
च्छुक्तिमात्रंपयःस्मृतम् उक्तानिपंचगव्यानिशक्तिमात्राणिसाधुभिः तत्समंमधुदुग्धान्नंग्रासमात्रमुदाहृतम् दधिप्रसृतमात्रंस्याल्लाजाःस्युर्मुष्टि
संमिताः पृथुकास्तत्प्रमाणास्युःसक्तवोपितथाविधाः पलार्द्धंगुडमानंचशर्करापितथाविधा ग्रासार्द्धमात्रमन्नानामिक्षुःपर्वप्रमाणकः एकं-
स्यात्पत्रपुष्पंचतथाधूपादिकल्पयेत् मातुलिंगंचतुःखंडं पनसंदशधाकृतम् अष्टधानारिकेरंचचतुर्धाकदलीफलम् त्रिधाकृतंतथाबेल्वंक-
पित्थंखंडितंद्विधा व्रीहयोमुष्टिमानाःस्युर्मुद्गामाषायवास्तथा तंडुलास्तुतदर्धंतुकोद्रवामुष्टिसंमिताः लवणंशुक्तिमात्रंस्यान्मरीचान्येकविंश
तिः खंडत्रयंतुमूलानांफलानांस्वप्रमाणतः अन्येषांग्रासमात्रंतुप्रसृतिःपायसस्यतु अक्षतास्तुयवाःप्रोक्तास्तंडुलाव्रीहयस्तथा एषांमध्ये-
केषांचिद्द्रव्याणामसंभवेआज्यमुपादेयं भरद्वाजमतात् चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमान् फलोपसंमितानेतान्गुग्गुलंबदरास्थिवत् द्रव्यंस्रु-
वेणहोतव्यंपाणिनाकठिनंहविः अथऋत्विग्वरणंपाद्मे बालाग्निहोत्रिणंविप्रंसुरूपंचगुणान्वितम् सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमु-
ख्यतमंकृत्वान्यांश्चतथर्त्विजः अहताम्बरसंछन्नान्स्रग्विणःशुचिभूषितान् अंगुलीयकानिचतथाकर्णवेष्टान्प्रदापयेत् वस्त्रयुग्मंतथोष्णीषंकुंड-

१ सालई इतिख्याता

लेकंठभूषणम् एतानिचैवसर्वाणि प्रारंभेसर्वकर्मणाम् पुरोहितायदत्वाथऋत्विग्भ्यः संप्रदापयेदिति व्रतानांमधुपर्कमाह विश्वामित्रः संपूज्य
मधुपर्केणऋत्विजः कर्मकारयेत् अपूज्यकारयन्कर्मकिल्बिषेणैवयुज्यते ऋत्विक्संख्यामात्स्ये हेमालंकारिणः कार्याः पंचविंशतिसंख्यया
तोषयेच्चसमंसर्वानाचार्येद्विगुणंभवेदिति अथसर्वतोभद्रमंडलंस्कांदे प्रागुदीच्यांगतारेखाः कुर्यादेकोनविंशतिः खंडेंदुस्त्रिपदः कोणे-
शृंखलापंचभिःपदैः एकादशपदावल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापी परिधिर्विंशतिःपदैः मध्येषोडशभिःकोष्ठैः पद्ममष्टदलंस्मृतम्
श्वेतेंदुःशृंखलाकृष्णावल्लीनीलेनपूरयेत् भद्रारुणासितावापी परिधिःपीतवर्णकः बाह्यांतरदलाश्वेताकर्णिकापीतवर्णका परिध्या-
वेष्टितपद्मबाह्येसत्वरजस्तमः तन्मध्येस्थापयेद्देवान्ब्रम्हाद्यांश्चसुरासुरान् इतिसर्वतोभद्रम् अथाष्टलिंगतोभद्रमाग्नेये चतुर्विंशति
रालेख्यारेखाःप्राग्दक्षिणायताः कोणेषुशृंखलाः पंचपदावल्यस्तुपार्श्वतः पदैर्नवभिरालेख्याश्चतुर्भिर्लघुशृंखलाः लघुवल्यःपदैःष-
ड्भिस्ततोष्टादशभिःपदैः कृत्वालिंगानिवाप्यस्युस्त्रयोदशभिरंतरा ततोवीथीद्वयेनैवपीठंकुर्याद्विचक्षणः तस्यपादाःपंचपदेद्वारिणय
पितथैवच एकाशीतिपदंमध्येपद्मस्वस्तिकमुच्यते कोणेषुशृंखलाःकार्याः पदैस्त्रिभिरतःपरं पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येवासमंत
तः एकादशपदावल्योमध्येष्टदलमालिखेत् पद्मंनवपदंत्वेवंलिंगतोभद्रमुच्यते शृंखलाःकृष्णवर्णेनवल्लीर्नीलेनपूरयेत् रक्तेनशृं-
खलालघ्वीर्वल्लीःपीतेनपूरयेत् लिंगानिकृष्णवर्णानिश्वेतेनाप्यथवापिकाः पीठंसपादंश्वेतेनपीतेनद्वारपूरणम् मध्येस्युःशृंखलारक्तावल्ली-
र्नीलेनपूरयेत् भद्राणिपीतवर्णानिपीतापंकजकर्णिका दलानिश्वेतवर्णानियद्वाचित्राणिकल्पयेत् तिस्रोरेखाबहिःकार्याःसितर-

मितिब्रह्माणं पूर्वपत्रे ऋग्वेदं० दक्षिणे यजुर्वेदं० पश्चिमे सामवेदं० उत्तरे अथर्ववेदं० आग्ने० अंगानि० नैर्ऋत्ये धर्मशास्त्राणि पुराणानि वायव्ये
ईशान्ये न्यायविस्तरान्० तत्तन्मंत्रैः आवाह्य संपूजयेत् ब्राह्मणान् संभोज्य स्वयं उपवासं कुर्यात् एवं द्वादशमासस्थशुक्लप्रतिपत्सु कुर्यात् अंते
सर्वतोभद्रस्थकलशे सौवर्णब्रह्माणं संपूज्य गां दत्वा विप्रान् सदन्नेन भोजयेत् स्वयमपि आशिषो गृहीत्वा भुंजीयादिति इति विद्याव्रतं अथ रोटक
सोमवारव्रतं भविष्ये श्रावणशुक्लप्रतिपत्सोमवारयुता यदा तदा कार्यम् प्रथमसोमवासरे वा सार्द्धमासत्रयं कार्यम् अधिकसौभाग्यसंपू
र्णसंपत्तिकामः सोमेशप्रीत्यर्थं रोटकसोमवारव्रतं करिष्ये इति संकल्प्य कार्तिकशुक्लचतुर्दशीपर्यंतं प्रत्यहं बिल्वदलैः सांबं संपूज्य कार्ति
कशुक्लचतुर्दश्यामुपोष्य रात्रौ पंचामृतपुरःसरं नानापुष्पादिभिः संपूज्य प्रातः पुरुषाहारसंमितं रोटकपंचकं कृत्वा द्वौ ब्राह्मणाय एकं देवाय द्वौ
आत्मने एवं वर्षपंचकं कृत्वा अंते राजतं सांबं उद्यापनविधिना संपूज्य हेमरौप्यरोटकौ यथाशक्ति कृत्वा आचार्यं संपूज्य व्रतपूर्तये तस्मै दत्वा गां च दत्वा ब्रा
ह्मणान् भोजयेदिति इति रोटकसोमवारव्रतम् इति श्रीमच्छांकर्यां प्रतिपद्व्रतानि अथ द्वितीयाव्रतानि तत्र भविष्ये कार्तिकशुक्लद्वितीया यमद्वि
तीया सा अपराह्णव्यापिनी ग्राह्या दिनद्वये व्याप्तौ परैव प्रातः साभ्यंगस्नात्वा आत्मनः अवैधव्य भ्रात्रायुष्यवृद्धिप्राप्तिकामनया यमपूजां करिष्ये इ
ति संकल्प्य पद्मे चंदनादिना यमं चित्रगुप्तं यमदूतांश्च विलिख्य पूजयेत् ततः भ्रातृभगिनीभिः यमाय अर्घ्यो देयः अर्घ्यमंत्रस्तु एह्येहि मार्तंडज
पाशहस्त यमांतक लोकादिपैरन्वितेश भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज त्राहि मां किंक
रैः सार्द्धं सूर्यपुत्र नमोस्तु ते भ्राता भगिनीप्रतोष्य वस्त्रादिना तद्गृहे भुक्त्वा ततः भगिनी आशिषः प्रार्थयेत् मार्कंडेय महाभाग सप्तकल्पांतजीवन

१ कमलम् २ मृत्युप्रमुखैः ३ युक्तः ४ यमद्वितीयायां कृता देवस्य तव या पूजा ताम्

थात्वंहितथामेभ्रातरंकुर्विति अथसुकृतफलं भविष्ये श्रावणशुक्लद्वितीयायांभृगुवारयुतायांचंद्रोदयव्यापिन्यांकार्यम् व्रतग्रहणं
कालौसंकीर्त्य ममअखिलपापक्षयपूर्वकपुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वारालक्ष्मीनारायणप्रीतयेवर्षत्रयमाचरितस्यसुकृतफलव्रतस्यसं
पूर्णतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये इतिसंकल्प्य पूर्वोक्तप्रकारेण आचार्यः सर्वतोभद्रस्थकलशेसौवर्णविष्णोर्नुकमितिमंत्रेणनाराय
णीसक्तुमिवतितउनेतिलक्ष्मीचसंपूज्यसुवर्णफलयुतंवंशपात्रस्थंवाणकंपुरतःस्थाप्यरात्रिंनिनयेत् प्रातःअग्निंप्रतिष्ठाप्य अन्वादध्यात्
नारायणलक्ष्मींचतिलसर्पिभ्यां अष्टोत्तरसंख्याकाहुतिभिः प्रतिद्रव्यंब्रह्मादिमंडलदेवताश्च एकैकयाज्याहुत्यायक्ष्ये स्थापनमंत्राण्यग्निहोम
ततः आचार्यसंपूज्यवायनंदद्यात् पंचामृतयुतानिगोधूमपिष्टमयानिउदुंबरफलसदृशानिषष्ठ्यधिकशतत्रयपरिमितानितावंतिसौवर्णा-
निचसवस्त्राणिदक्षिणासौभाग्यद्रव्ययुतानिसुकृतफलयुतानिवंश - - अनेनमंत्रेणदद्यात् पुत्रपौत्रस
मृद्ध्यर्थंसौभाग्यारोग्यसिद्धये वाणकंसंप्रदास्यामिव्रतसंपूर्तिहेतवे १ ३ १
श्रावणेचद्वितीयायांसुभद्रार्चितमाधव सुकृतदानफलंमे स्या२ : :
श्रीकृष्णस्तारकोमत्यं श्रीकृष्णःप्रीयतामिति ततःकपिलांगांदत्वाचतुर्विंशतिब्राह्मणान्सदन्नेनसंतर्प्य आशि
अथभविष्ये बालचंद्रव्रतम् मार्गशीर्षशुक्लद्वितीयायांचंद्रोदयव्यापिन्यांकार्यम् देशकालौसंकीर्त्य आत्मनः अवै
क्ष्मीकामनयासोमराजप्रीत्यर्थंद्वादशवर्षपर्यंतमाचरितस्यबालचंद्रव्रतस्यसंपूर्णतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये :

भद्रस्थकलशेसौवर्णंआप्यायस्वेतिमंत्रेणविधुंसंपूज्य क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन्
इतिअष्टांगार्घ्यंदत्वाप्रार्थयेत् सोमराजनमस्तुभ्यंक्षीराब्धिमथनोद्भव व्रतेनानेनक्रियमाणेनतुष्टोभवनिशापते प्रातरग्निप्रतिष्ठाप्यअन्वादध्यात्
सोमराजपलाशसमित्तिलयवाज्यैरष्टोत्तरसख्याकाहुतिभिः प्रतिद्रव्यंब्रम्हादिदेवताश्चएकैकयाआज्याहुत्यायक्ष्ये स्थापनमंत्रेणहुत्वागांवाप
नंचदत्वाब्राम्हणान्भोजयेदिति इतिमूलोद्यापनकौमुद्यांद्वितीयाव्रतानिसमाप्तानि अथतृतीयाव्रतानि भविष्ये पूर्वाण्हव्यापिन्यांचैत्रशुक्लतृ-
तीयायांसौभाग्यशयनव्रतम् द्वादश अष्टौसप्तवावर्षाणिकार्यम् प्रातःशुक्लतिलैःस्नात्वा देशकालौसंकीर्त्य आत्मनः भर्त्रासहएकशय्या
सनशयनभोगसौभाग्यपुत्रपौत्राद्यभिप्रायेउमामहेश्वरप्रीत्यर्थंसौभाग्यशयनव्रतंकरिष्ये इतिसंकल्प्य उमामहेश्वरयोः प्रतिमांसौवर्णींपू-
जाविधिनापंचामृतपुरःसरंतत्तन्मंत्राभ्यांपीठेसंपूज्य अंगपूजामारभेत् शिवाय० पाटलायै० पादौपूजयामि एवंसर्वत्र शिवाय० जयायै०
गुल्फौ० त्रिगुणाय० भवान्यै० जंघायुग्मं० रुद्राय० जयायै० जानुनी० हरिकेशाय० वरदायै० ऊरू० ईशानाय० रत्यै० कटी० शूलिने० को-
टरायै० कुक्षिद्वयं० शूलपाणये० मंगलायै० उदरं० सर्वात्मने० ईशान्यै० कुचद्वयं० वेदात्मने० रुद्राण्यै० कंठं० त्रिपुरघ्नाय० विश्वायै० करद्व-
यं० हराय० भवान्यै० नासायुग्मं० उग्राय० ललितायै० भ्रूयुग्मं० शर्वाय० देव्यै० कर्णद्वयं० श्रीकंठाय० शिवायै० केशान्० भीमाय० सर्वात्मरू-
पिण्यै शिरःपू० इतिसंपूज्य पुरतःसौभाग्याष्टकंस्थापयेत् घृतनिष्पावकुसुंभक्षीरजीरकतृणराजइक्षुलवणधान्यानिचैत्रेगोशृंगोदकं-
प्राश्यभूमौस्वपेत् पुनःप्रभातेसंपूज्यदेवंद्विजदंपतीवस्त्रादिनासंपूज्य सौभाग्याष्टकयुतंस्वर्णप्रतिमाद्वयंसदक्षिणाकंललिताप्रीयतामितिपद-

१ वाल इति प्रसिद्धा    २ करडई प्रसिद्धा.

न्ब्राम्हणायदद्यात् एवंप्रतिमासंतृतीयायांप्राशनेदानमंत्रेच पुष्पेचविशेषः चैत्रादिद्वादशमासेषुक्रमेणगोश्रृंगोदकंगोमयं मंदारकुसुमंबिल्वपत्रंद
धिकुशोदकंक्षीरं पृषदाज्यंगोमूत्रं घृतंकृष्णतिलान् पंचगव्यंललिता० विजया० भद्रा० भवानी० कुमु० शिवा० वासुदेवी० गौरी० मंगला० कम० सती० उमा०
षाधिक्रमेण मल्लिका० अशोकं० कमलं० कौसुभं० नीलोत्पलम्० मालती० कुब्जकं० करवीरं० बाणं० चंपकं० सिंदुवारं० जपा० एतेषांअभावेकरवीरंसर्वत्र
तांगेषुसर्वोपस्करयुतेशयनेहेमउमामहेश्वरंगोयुग्मंचहेमंपुरतःसंपूज्य ततोवस्त्रादिनादंपतीसंपूज्यदद्यात् सुखसंतानवृद्ध्यर्थं शयनंतेद्विजोत्तम ददा
मृत्यर्थंप्रीयतांमेत्युमेश्वरोइति अन्याअपिदंपतीर्यथाविभवंसपूज्यगांचसवत्सांदत्वाब्राम्हणान्सदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत अ
मध्यान्हव्यापिन्यांचैत्रशुक्लतृतीयायांअरुंधतीव्रतम् तिथ्यादिसंकीर्त्यआत्मनः अवैधव्यसौभाग्यपुत्रपौत्रावाप्तिकामनयाअरुंधतीव्रतंकरिष्ये
रात्रौपोषितोनक्ताशीवावृताचार्यः सर्वतोभद्रमंडलेजीरकपुंजेलवणान्वितेवस्त्रयुग्मवेष्टितेकलशेहेमेवसिष्ठारुंधतिप्रतिमेनाममंत्रेणप्रतिष्ठाप्यउपचा
रैःसंपूज्य अंगपूजांकुर्यात् वेदवंद्यै० पादौपू० लोकवंद्यै० जानुनीपू० संपत्तिदायै० कटिं० गंभीरनाभ्यै० नाभिं० लोकधात्र्यै० स्तनौ० जगद्धात्र्यै०
कंठं० शांत्यै० बाहू० वरदायै० हस्तौ० धृत्यै० मुखं० अरुंधत्यै० शिरःपू० वसिष्ठप्रियायै० सर्वांगं० उत्तरार्घ्यं अरुंधति महाभागे वसिष्ठप्रिय-
वादिनि सौभाग्यंदेहिमेदेवि गृहाणार्घ्यंनमोस्तुते ततःनमस्कारः पुत्रान्देहि धनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमो
स्तुते ततःसुवासिनीःसंपूज्य प्रातःहोमंकुर्यात् अत्रप्रधानम् अरुंधतीसमित्तिलाहुतिभिः प्रतिद्रव्यंअष्टोत्तरशतसंख्याकाभिः ब्रम्हा
श्चैकैकाज्याहुत्यायक्ष्ये ततःहोमशेषंसमाप्य आचार्यंसंपूज्य घृतपूरितकांस्यपात्रंसदीपपीठंचदत्वा चतुर्विंशतिद्वादशयथाशक्तिवा

१ दधियुक्तंघृतम्   २ निर्गुंडीपुष्पं

मावा॰ आप्यायस्व॰ सोमं॰ ईशान्यां॰ तमीशानंगौतम ईशानोजगती ईशानावा॰ तमीशानंजग॰ ईशानं॰ ईशानेंद्रयोर्मध्ये ज्मयाअत्र
मैत्रावरुणोवसवस्त्रिष्टुप् वस्वावाहने॰ ज्मयाअत्रवसवो॰ वसून्॰ इंद्राग्निमध्ये आरुद्रासश्यावाश्वएकादशरुद्राजगती एकादशरुद्रावाहने॰
आरुद्रासः॰ एकादशरुद्रानआ॰ अग्नियमयोर्मध्ये त्यान्नुसाम्मदोमृत्स्योद्वादशादित्यागायत्री द्वादशादित्यावाहनेवि॰ त्यान्नुक्षत्रियाँअ-
व॰ द्वादशादित्याना॰ यमनिर्ऋतिमध्ये मरुतोयस्यराहूगणोमरुतोगायत्री मरुदावाहने॰ मरुतोयस्य॰ मरुतः आवा॰ निर्ऋतिवरुण-
योर्मध्ये॰ ओमासोमधुच्छंदाविश्वेदेवागायत्री विश्वेदेवावा॰ ओमासश्चर्ष॰ विश्वान्देवान्॰ वरुणवायुमध्ये यज्ञेनयज्ञमितिनाराय-
णःपुरुषस्त्रिष्टुप् साध्यदेवावा॰ यज्ञेनयज्ञ॰ साध्यान्देवान्॰ वायुसोममध्ये अश्विनावर्तिराहूगणोगोतमोश्विनावुष्णिक् अश्व्यावा॰अ
श्विनावर्ति॰ अश्विनौ॰ सोमेशानयोर्मध्ये यदक्रंदोदीर्घतमास्कंदस्त्रिष्टुप् स्कंदावा॰ यदक्रंद॰ स्कंदंआ॰ ब्रह्मेंद्रमध्ये इदंविष्णुर्मेधा-
तिथिर्विष्णुर्गायत्री विष्ण्वा॰ इदंविष्णु॰ विष्णुं॰ ब्रह्माग्निमध्ये गणानांत्वागृत्समदोगणपतिर्जगती गणपत्यावाहनेविनि॰ गणानांत्वा॰
गणपतिंआवाहयामि ब्रह्मयममध्ये आयंतुनःप्रजापतिःपितरस्त्रिष्टुप् पित्रावा॰ आयंतुनःपितर॰ पितॄनआवाहयामि ब्रह्मनिर्ऋति
मध्ये अप्सरसांमैत्रावरुणिर्गंधर्वाप्सरसोनुष्टुप् गंधर्वाप्सरावाहनेविनियोगः अप्सरसां॰ गंधर्वाप्सरसआ॰ ब्रह्मवरुणमध्ये जज्ञा-
तिः सप्तमातरोअनुष्टुप् सप्तमात्रावाहने॰ जज्ञानंसप्तमातर॰ सप्तमातॄनआ॰ ब्रह्मवायुमध्ये॰ नमोअस्तुसर्पेभ्योविश्वेदेवाःसर्पाअ
नुष्टुप्॰ सर्पावाह॰ नमोअस्तुसर्पेभ्यो॰ सर्पान्आवा॰ ब्रह्मसोममध्ये तामग्निवर्णांसोभरिर्दुर्गात्रिष्टुप् दुर्गावाहनेवि॰ तामग्निवर्णां॰

दुर्गांआवाहयामि ब्रह्मेशानमध्ये इमंमेगंगेक्षिप्रैष्यमेधागंगादिनद्योजगती गंगाद्यावा० इमंमेगं० गंगादिनदीरा० ततःमंडलांतःपद्मेशांन
दलाग्रादारभ्यदलाग्राष्टकेषु ऐशान्यां अदितिर्लेक्ष्योदक्षोनुष्टुप् दक्षावा० अदितिर्ह्यजनिष्ठ० दक्षमा० पूर्वे सहस्रशीर्षेतिनारायणः
पुरुषोनुष्टुप् नारायणावा० सहस्रशीर्षा० पुरुषंआवा० आग्नेय्याम् जातवेदसेकश्यपोदुर्गात्रिष्टुप् दुर्गावा० जातवेदसे० दुर्गांआवा० दक्षि
णस्यां उदीरतामवरः स्वधात्रिष्टुप स्वधावा० उदीरतामवर० स्वधाआवा० निर्ऋत्यां० परंमृत्यौः संकुशिकोमृत्युस्त्रिष्टुप् मृत्वा वा०
परंमृत्योअनु० मृत्युंआवा० पश्चिमे० आयंगौःसार्पराज्ञीसर्पागायत्री सर्पावा० आयंगौः० सर्पानावा० वायव्यां० धाम्नोधाम्नोराज
न्सप्तसागराअर्षी० सप्तसागरा० धाम्नोधाम्नो० सप्तसागरान्आ० उत्तरे मरुतोयस्यराहूगणोमरुतोगायत्री मरुदावाहनेविनियोगः म
रुतोयस्य० मरुतः आ० मध्येब्रम्हणःपादमूले आतूनइंद्रेतिप्रजापतिर्गणपतिर्गायत्री गणपत्यावाह० आतूनइंद्र० गणपतिं आ०
र्णिकाधःस्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री भूम्यावा० स्योनापृथिवि० भूमिंआवा० तदुपरि मेरवेनमः मेरुं आ० :
नः पूर्वादिक्रमेण पूर्वेअग्निमीळइति० ऋग्वेदंआ० दक्षिणस्यांइषेत्वेति यजुर्वेदंआवा० पश्चिमे० अग्नआयाहिवीतयइति सामवेदंआ० उ
त्तरेशन्नोदेवीरिति अथर्ववेदंआ० मंडलबाह्ये पूर्वादिक्रमेण दिक्पालायुधावाहनानि पूर्वे वज्राय० आग्नेयादिषुशक्तये० इंद्राय० पाशाय० अं
कुशाय० गदायै० त्रिशूलाय० पुनःपूर्वादिदिक्षुतद्बाह्ये ऐरावताय० मेषाय० महिषाय० प्रेताय० मकराय० एणाय० शिबिकायै० वृषभाय० पुनः
पूर्वाद्यारभ्यतद्बाह्ये गौतमाय० भरद्वाजाय० विश्वामित्राय० कश्यपाय० जमदग्नये० अत्रये० वसिष्ठाय० अरुंधत्यै० तद्बाह्येपूर्वादिषु आदित्यादिग्रहान्

पूर्वेसूर्यम् एवमग्रे सोमं॰ भौमं॰ बुधं॰ गुरुं॰ शुक्रं॰ शनिं॰ राहुं॰ पूर्वेशांतराले केतुम्॰ तद्बाह्ये शक्तयः पूर्वादिषु ऐंद्रीं॰ कौमारीं॰ ब्राह्मीं॰ वारा-
हीं॰ चामुंडाम्॰ वैष्णवीं॰ माहेश्वरीं॰ वैनायकीं॰ स्थाप्य॰ तदस्तु मित्रावरुणा॰ गृहावैप्रतिष्ठासूक्तं॰ प्रतिष्ठाप्य पूजयेत् तद्यथादेशकालौसं-
कीर्त्यब्रह्मादिस्थापितदेवतानां षोडशोपचारैः पूजनमहं करिष्ये स्ववामतः जलपूर्णकलशं प्रतिष्ठाप्य संपूज्य गंगाद्यावाह्य ततः दक्षि
णतः शंखं संपूज्य आत्मानं पूजासामग्रीं च संप्रोक्ष्य तत्तन्मंत्रैर्नाममंत्रैर्वा पुरुषसूक्तेन च पूजयेत् ततः मंडलोपरि अक्षतपुंजे कलशं प्रति-
ष्ठापयेत् तद्यथा महीद्यौरिति भूमिं स्पृष्ट्वा॰ ओषधयः संवदंते इति यवादिकान् क्षिप्त्वा आकलशेषु धावति इति कलशं संस्थाप्य॰ इममे
गंगे इति जलं आपूर्य॰ गंधद्वारामिति गंधं क्षिप्त्वा या ओषधीरिति सर्वौषधीः क्षिप्त्वा कांडात्कांडादिति दूर्वाः अश्वत्थे वो इति पंचपल्लवान्
स्योना पृथिवि इति सप्तमृदः याः फलिनीर्या इति फलं सहिरत्नानीति रत्नं हिरण्यरूप इति हिरण्यं युवा सुवासा इति वस्त्रेणावेष्ट्य पूर्णादर्वि
इति उपरि पूर्णपात्रं न्यसेत् तत्त्वायामीति वरुणं आवाह्य पूजयेत् कलशस्य मुखे विष्णुरित्याद्यावाह्य प्रार्थयेत् देवदानवसंवादे मथ्यमाने महोदधौ उत्प-
न्नोसि तदा कुंभ विधृतो विष्णुना स्वयम् त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः शिवः स्वयं त्वमे
वासि विष्णुस्त्वं च प्रजापतिः आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भ
व सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ततः प्रतिमानां अग्न्युत्तारणं कुर्यात् तद्यथा देशकालौ संकीर्त्य अस्य देवस्य पूज्यत्वाधिकारसिद्ध्यर्थं
मग्न्युत्तारणं करिष्ये अग्निः सप्तिमिति सप्तर्चस्यस्य सूक्तस्य सोचिको वैश्वानरस्त्रिष्टुप् अग्न्युत्तारणे विनियोगः अग्निः सप्तिमिति सूक्तमग्निपदरहि

तंसहितंचपठेत् अश्मन्नूर्जेत्यनुवाकेनवाकुर्यात् अथप्राणप्रतिष्ठा अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामाथर्वा
णिछंदांसि॰ चैतन्यरूपापराप्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रौंकीलकं देवस्यप्राणप्रतिष्ठापनेविनियोगः ॐ आंह्रींक्रौं अंकंखंगंघंङं
आंक्रौंह्रीं पृथिव्यप्तेजोवाय्वाकाशात्मने आंअंगु॰ ॐ आंह्रींक्रौं ईंचंछंजंझंञं क्रौंह्रीं आंशब्दस्पर्शरूपरसगंधात्मने ईंतर्जनी॰ ॐ आं-
ह्रींक्रौं ऊंटंठंडंढंणं ऊंक्रौंह्रीं आंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंमध्यमा॰ ॐ आंह्रींक्रौं ऐंतंथंदंधंनं ऐंक्रौंह्रीं आंवाक्पाणिपादपायूपस्था-
त्मनेऐंअनामिकाभ्यां॰ ॐ आंह्रींक्रौं ओंपंफंबंभंमं ओंक्रौंह्रीं आंवचनादानगतिविसर्गानंदात्मने कनि॰ ॐ आंह्रींक्रौं अंयंरंलंवंशंषंसंहंळंक्षं अः क्रौंह्रीं
आंमनोबुद्ध्यहंकारचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यां॰ एवंहृदयादि ॐ आंह्रींक्रौं अंयंरंलंवंशंषंसंहंळंक्षं अः क्रौंह्रीं आंदेवस्यप्राणइहप्रा-
णाः ॐ आंह्रींक्रौं अंयंरंलंवंशंषंसंहंळंक्षं अः क्रौंह्रीं आंदेवस्यजीवइहस्थितः ॐ आंह्रींक्रौं अंयंरंलंवंशंषंसंहंळंक्षं अः क्रौंह्रीं आंदेवस्यसर्वे
न्द्रियाणिवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपादपायूपस्थानीहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा असुनीतइतिऋचंपठेत् गर्भाधानादिपंचदशसं-
स्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तिं करिष्ये १५ ततः रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशं कोदंडमिक्षूद्भवमथगुण-
मप्यंकुशं पंचबाणान् बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरी प्राणशक्तिः परानः तत-
श्चत्वारिवागितिपठेत् ततः कलशस्थपूर्णपात्रे परिस्रावरणंदेवं तत्तद्देवताप्रकाशमंत्रेणसंस्थाप्यपूजयेत् पात्रांतरेवा पंचामृतस्नानपर्यंतं
संपूज्यतदनंतरं कलशेस्थापयेदितिवा अथपूजाविधिः सर्वव्रतेषुसामान्यतउच्यते आगच्छदेवदेवेश तेजोराशेजगत्पते क्रियमा-

ज्य मोदक पोलिका पूरिका वटक घृतपाचित पक्वान्नादि पूरितं वस्त्र सहितं सशूर्पं वायनं तेभ्यो दत्वा गां च दद्यात् अथ भविष्ये मुहूर्तमात्रेपि परवि-
द्धायां श्रावण शुक्ल तृतीयायां स्वर्णगौरीव्रतम् प्रातः शुक्ल तिलैः स्नात्वा आत्मनः सौभाग्यादि पुत्र पौत्र संपत्ति कामनया ऽचरित स्वर्णगौरीव्रतोद्या
पनं करिष्ये वृताचार्यः उक्तप्रकारेण लिंगभद्रे षोडशनमस्कारमंत्रेण नाममंत्रेण वा होमः पलताम्रमय तिल पूरित पूर्णपात्रयुते मृन्मये कलशे हैमे हरिगौरीप्र-
तिमे त्र्यंबकं गौरीर्मिमाय इति मन्त्राभ्यां संपूज्य पुराणपठनादिना रात्रिं निनीय प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात् उमामहेश्वरौ तिलयवाज्याहुतिभिः प्रति
द्रव्य अष्टोत्तरशतसंख्याकाभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये ततः आचार्याय गां दत्वा षोडश दंपतीः संपूज्य वंशपात्रस्थ षोडशविध-
षोडशसंख्याक पक्वान्नसयुतं वायनं तेभ्यो दत्वा दक्षिणादिभिः प्रतोष्य आशिषो गृह्णीयात् अथ भविष्य स्कंदयोर्मुहूर्तमात्रेपि परविद्धायां भा
द्रशुक्लतृतीयायां हरितालिकाव्रत तिथ्यां युक्तिरव्य मम समस्त पापक्षयपूर्वकं सप्तजन्मसु सौभाग्यादि विविधभोग प्राप्तिद्वारा उमामहेश्वरप्रीत्यर्थं आ-
चरित हरितालिकाव्रतोद्यापनं करिष्ये ततः वृताचार्यः उक्तविधिना लिंगतोभद्रे द्रोणपरिमितव्रीहिस्थ कलशे राजतं शिवं हैमीं गौरीं पुरतः राजतं वृषं उक्त
मंत्रैः प्रतिष्ठाप्य संपूजयेत् तत्र मंत्रः मंदारमालाकुलितालकायै कपालमालांकितशेखराय दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय त
तन्मंत्रैर्वा ततः प्रार्थयेत् नमः शिवाय साम्बाय पंचवक्त्राय शूलिने नंदिभृंगि महाकालगणयुक्ताय शंभवे शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे
नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमोनमः येन कामेन देवि त्वं पूजितासि महेश्वरि तं पूर्णं कुरु मे कामं सौभाग्यं च प्रयच्छ मे ततः सुवासिनीभिः स
पूज्य रात्रिं निनयेत् प्रातः अग्निं प्रतिष्ठाप्य अन्वादध्यात् प्रधानं उमामहेश्वरं प्रति द्रव्यं अष्टोत्तरशतसंख्याकाभिः तिलयवाज्याहुतिभिः ब्रम्हादिदेवता

१ जगत्पालकायै

परिवारदेवताभ्यएकैकयाज्याहुत्यायक्ष्ये ततःसंपूजिताचार्याय गांदत्वा षोडशाष्टौ वायुग्मानि संपूज्य सौभाग्यवस्त्रदक्षिणायुतानि सशूर्पाणि षोडशवायनानि द-
द्यात् तत्रमंत्रः सौभाग्यारोग्यकामानां सर्वसंपत्समृद्धये गौरीगिरिशतुष्ट्यर्थं वायनं तेददाम्यहं अथहस्तगौरीव्रतं भविष्ये हस्तनक्षत्रगते सूर्येत्र-
योदशवर्षात्मकं हस्तगौरीव्रतं तिथ्यादिसंकीर्त्य आत्मनः सकलदुःखनाशसौभाग्यसुखावाप्तिद्वारा गौरीप्रीत्यर्थं आचरित हस्तगौरीव्रतपूर्णतासिद्ध-
येतदुद्यापनाख्यं कर्मकरिष्ये वृताचार्यः लिंगतोभद्रे उक्तप्रकारेण कलशे कांचनगजे गौरीं हरंगणेशंच सौवर्णं सुवर्णपुष्पादिना तत्तन्मंत्रैः संपूज्य सु-
वासिनीः संपूजयेत् अग्निं प्रतिष्ठाप्य अन्वाधानं गौरीं हरंगणेशंच अष्टोत्तरशतं तिलाज्याहुतिभिः ब्रह्मादिदेवताः एकैकयाज्याहुत्यायक्ष्ये वाय-
नं त्रयोदशविधं त्रयोदशसंख्याकपक्वान्नपूरितं सौवर्णपात्रे वैणवे वा कृत्वा त्रयोदशदंपतीः सुवासिनीर्वा संपूज्य तेभ्यो दद्यात् तत्रमंत्रः पक्वान्नपूरि-
तानिमव्रतसंपूर्णहेतवे वायनं ते प्रयच्छामि गौरीगिरिशतुष्टये गांदद्यात् अथकोटीश्वरीव्रतम् भाद्रपदशुक्लतृतीं तत्तुवर्षचतुष्टयं कार्यं
तत्रविधिः आत्मनः दुर्भगत्वनाशनपूर्वकं सुभगत्वप्राप्तिकामनया गौरीप्रीत्यर्थं कोटीश्वरीव्रतं करिष्ये अखंडानां तेलानां वा लक्षं एकं पयसि
पक्वात् दन्नेन देवीं निर्माय उक्तप्रकारेण पीठं संपूज्य रक्तवस्त्रं दत्वा विशेषपूजां कुर्यात् तत्रमंत्रः नमोनमस्ते देवि टीश्वरि नमस्तु
भ्यं नमस्ते हरिवल्लभे ततोऽर्घ्यं नमो लक्ष्मेश्वरि देवि कोटीश्वरि नमोस्तुते गृहाणार्घ्यं मयादत्तं दुर्गे देवि नमोस्तुते ततःसु व्रतांते गा-
न्दद्यात् अथ भविष्ये चंद्रोदयव्यापिन्यां भाद्रपदकृष्णतृतीयायां बृहद्गौरीव्रतम् तच्च वर्षपंचकं कार्यं तिथ्यादिसंकी
र्त्य प्रीतिकामनया आचरित बृहद्गौरीव्रतोद्यापनं करिष्ये वृताचार्यः उक्तप्रकारेण आलवालेसागं बृहतीवृक्षं संस्थाप्य संपूज्य तत्पुरतः १७

१ रिंगणी इतिख्याता। २ सुवर्णमयीम्

णसंपूज्य तत्पुरतः चतुःषष्टिबीजयुतंसौवर्णबृहतीफलंसंपूज्यार्घ्यंदद्यात् मंत्रः क्षेमसंपत्करेदेविसर्वसौभाग्यदायिनिसर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तु-
ते चंद्रोदयानन्तरअर्घ्यं गगनांगणसदीपलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ततः अग्निंप्रतिष्ठाप्यान्वादध्यात् गौरीं अ-
ष्टोत्तरशतसंख्याकघृताक्ततिलाहुतिभिः ब्रह्मादिदेवताश्च एकैकयाज्याहुत्यायक्ष्ये ततःपंचविप्रान्सुवासिनीःसंपूज्य कंचुकीताटंककंठसूत्रसौ-
भाग्यद्रव्यसिंदूरजीरकगोधूमपिष्टजातबृहतीफलपंचकयुक्तानिसूत्रवेष्टितवंशपात्रयुग्मयुतानिसवस्त्रदक्षिणानिपंचवायनानिदत्वासदन्नेनब्राह्म-
णान्संतर्प्यतत्सुवर्णनिर्मितबृहतीफलंकंठेधृत्वाइष्टजनैःसहभुंजीत अथमार्गशीर्षेमाघेवाकृष्णातृतीयायांसौभाग्यसुंदरीव्रतम् तच्चतुर्थीयुतायांका-
र्यम् तिथ्यादिसंकीर्त्य आत्मनः सर्वदुःखव्याधिदारिद्र्यादिनाशनपूर्वकंसुखसौभाग्यपुत्रपौत्रसुरूपतादिप्राप्तिद्वारागौरीप्रीत्यर्थंसौभाग्यसुंदरीव्रतं
करिष्ये इतिसंकल्प्य ततःउमामहेश्वरंसौवर्णंराजतं वाकृत्वाएकलिंगोद्भवेमंडले वक्ष्यमाणद्रव्यैर्द्वादशमासेषुप्रतितृतीयायांसंपूजयेत् मार्गशीर्षे
कृष्णतृतीयायांप्रातः अपामार्गदंतकाष्ठं सौभाग्यसुंदरीदेवतानाम द्रोणपुष्पं दाडिमीफलेनार्घ्यं मोदकनैवेद्यं यक्षकर्दमलेपः अगरुधूपः घृत
दीपः सर्वासुतृतीयासु एवंपूजांकृत्वास्वयंकर्पूरंप्राशयेत् एवंसर्वत्र पौषेवेलिकौदंतकाष्ठं राज्यसौभाग्यदादेवता मरुबकंपुष्पं धात्रीफलेना-
र्घ्यं घृतशर्करान्वितवटकानैवेद्यं स्वयंकंकोलकंप्राशयेत् माघेबदरीदंतकाष्ठंरूपसौभाग्यसुंदरीनाम चूतपुष्पंनारीकेरेणार्घ्यं शष्कुलीनै-
वेद्यं कस्तूरीभक्षणं फाल्गुनेबिल्वदंतकाष्ठं सौभाग्यसुंदरीनाम कांचनारपुष्पं घृतशर्करान्वितसक्तुनैवेद्यं बीजपूरेणार्घ्यं चंदनोदकप्रा-
शनं चैत्रेजंबूदंतकाष्ठं सुखसौभाग्यसुंदरीनाम दमनकपुष्पं शर्कराघृतयुतमंडकनैवेद्यं बिल्वफलेनार्घ्यं अर्जुनपत्रभक्षणम् वैशा-

१ कर्णभूषणं २ अघाडाइतिप्रसिद्धः ३ (कर्पूरः, कृष्णागरु., कस्तूरी, चंदनं, केशरं) एताम्पंचैकत्रसंयोज्यनिर्मितोयक्षकर्दमः ४ वावडिंगइतिख्यातस्य ५ मरवाइतिख्यातस्य
६. आम्रवृक्षः ७ मातुलिंगम्

रवेमालती दंतकाष्ठं पतिसौभाग्यदानाम सितारक्तपद्ममल्लिकापुष्पं शर्कराघृतकर्पूरयुतदधिभक्तनैवेद्यं कदलीफलेनार्घ्यं सुवर्णोदकप्राशनम् - ज्येष्ठे यूथिकादंतकाष्ठं लावण्यस्कंभगानाम कदलीफलेनार्घ्यं घृतपूरिकानैवेद्यं मौक्तिकांबुप्राशनम् आषाढे अशोककाष्ठं पतिसौभाग्यसुं बिल्वपत्रम् जंबूफलार्घ्यं पायसनैवेद्यं विद्रुमांबुप्राशनम् श्रावणे बिल्वकाष्ठं सर्वेश्वरीनाम जातीपुष्पम् शष्कुलकसारनै- कदलीफलार्घ्यं रजतांबुप्राशनम् भाद्रे मातुलिंगकाष्ठम् सौभाग्यसुंदरीनाम उत्पलपुष्पम् कर्कोटिकीफलेनार्घ्यं शाकवर्तिन्यंनै वेद्यम् माणिक्यांबुप्राशनम् आश्विने पूक्षकाष्ठं पुत्रसौभाग्यस्कंदरीनाम शतपत्रपुष्पम् नारिंगकूष्मांडार्घ्यं घृतशर्करान्वितंग- औदुंबरांबुप्राशनम् कार्तिके औदुंबरकाष्ठंसंयोगस्कंदरीनाम केतकीपुष्पंसुगंधिशालिनैवेद्यम् अंकोडेनार्घ्यम् ल- एवंचीर्णव्रते मार्गकृष्णतृतीयायामुद्यापनम् पूर्वोक्तसंकल्पंकृत्वा आचार्यं वृत्वामंडले उमामहेश्वरमूर्तिपूर्वपूजितां रक्तव- स्त्राद्युपचारैः संपूज्य प्रागुक्तपुष्पादिकंसमर्प्य जागरणादिनारात्रिंनिनयेत् प्रातःअग्निंप्रतिष्ठाप्य अन्वादध्यात् अथप्रधानम् उमामहेश्वरौ धुत्तूरयुक्तैः कुसुंभकुसुमैः किंशुकैर्वा शतपत्रैर्वा अष्टोत्तरशतसंख्याकाहुतिभिः प्रतिदेवंतत्तन्मंत्राभ्यांब्रम्हादिदेवताश्च एकैकया ज्याहु ध्ये ततःअष्टौचत्वारिवामिथुनानिवस्त्रादिभिःसंपूज्यतेभ्यः कुंकुमलवणगुडनारीकेलनागवल्लीदूर्वाकज्जलसिंदूराष्टकं शूर्पस्थंदत्वा चार्यायमंडलमुमामहेश्वरप्रतिमांचदत्वाप्रार्थयेत् पूजितासिमयादेवि सर्वसौभाग्यसुंदरि दत्वामत्प्रार्थितान्कामान् गच्छदेवियथासुखम् ततः र्थ्य आशिषोगृहीत्वास्वयंभुंजीत अथपरशुरामजयंतीव्रतं वैशाखशुक्लतृतीयायांनिशाद्ययामव्यापिन्यांभविष्ये तिथ्यादिसंकीर्त्य

१ चमेलीइतिख्याता २ जुईइतिख्याता ३ काकडीइतिख्याता ४ पलाशपुष्पैः ५ कमलैः

लपापक्षयपूर्वकंचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं आचरितपरशुरामजयंतीव्रतोद्यापनंकरिष्येइतिसंकल्प्य वृताचार्यः सर्वतोभ
द्रस्थकलशेहेमपरशुरामं विष्णोर्नुकमितिमंत्रेणसंपूज्यरात्रौजागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्य परशुरामंघृताक्तपायसद्रव्येणअष्टोत्तरशतसंख्या
काहुतिभिः ब्रम्हादिदेवताश्च एकैकयाआज्याहुत्यायष्ट्वा ततःपीठंगांचदत्वाब्राम्हणान्भोजयेत् इतिपरशुरामजयंती इतितृतीयाव्रतानि अथ
चतुर्थीव्रतानि संकष्टचतुर्थीव्रतं चंद्रोदयव्यापिन्याकार्यम् दिनद्वये तद्व्याप्तावव्याप्तौवापूर्वा मासपक्षाद्युल्लिख्य विद्याधनपुत्रारोग्यमुक्तिसं
कष्टनाशकामेनस्त्रीभर्त्रादिकामनयाचरितंसंकष्टचतुर्थीव्रतोद्यापनंकरिष्ये वृताचार्यः उक्तप्रकारेणसर्वतोभद्रस्थकलशेहेमंगणेशंप्रतिष्ठाप्य-
पूजयेत् अथध्यानम् लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकं नानारत्नैःसुवेषाढ्यं प्रसन्नास्यंविचिंतये ध्यानं० श्रीगणेशाय० आवाहयामि० गणे
शाय० आसनं० विघ्ननाशिने०पाद्यं० लंबोदरायेति० अर्घ्यं० चंद्रार्धधारिणे० विश्वप्रियाय० आचमं० ब्रम्हचारिणे०स्नानं०शूर्पकर्णा०
वस्त्रं० उपवीतं० कुब्जायच० चंदनंरुद्रपुत्राय पुष्पंचगुणशालिने विकटायेतिधूपंचदीपंरुद्रप्रियायच नैवेद्यंविघ्ननाशाय तांबूलंसिद्धिदा
यच फलंसंकष्टनाशायएकदंतायदक्षिणाम् नीराजनंवामनायदक्षिणाहरसूनवे पुष्पांजलिंकुमाराय नमोविद्याधरायच ततःशूर्पं पायस
पूर्णंरक्तवस्त्रेणावेष्टितम्गणेशायनिवेदयेत् ततश्चंद्रायार्घ्यं तदानींपंचम्यावाहोमंकुर्यात् प्रधानंगणपतिं गणानांत्वेतिमंत्रेण तद्गायत्र्यावादूर्वा
र. ताज्यमोदकपायसद्रव्यैःप्रतिद्रव्यंअष्टोत्तरसहस्रंअष्टोत्तरशतमष्टाविंशतिर्वात्संख्याकाहुतिभिर्यष्ट्वा ब्रम्हादिदेवताश्चकेवलमोदकैर्वा एवंहोमंस-
माप्य एकविंशतिब्राम्हणानेकविंशतिनामभिः वस्त्रादिनापूज्य एकविंशतिपक्वान्नैःसंतर्पयेत् गणंजयः गणपतिः हेरंबःधरणीधरः महा

गणपतिः यक्षेश्वरः क्षिप्रप्रसादनः अमोघसिद्धिः अमृतः मंत्रः चिंतामणिः निधिः सुमंगलः बीजं आशापूरकः वरदः शिवः काश्यपः नंदनः वा-
चासिद्धिः ढुंढिनायकः ततः आचार्याय शूर्पस्थैकविंशतिमोदकं वायनं रक्तवस्त्रवेष्टितं दद्यात् मंत्रः विप्रवर्य नमस्तुभ्यं मोदकान्वै ददाम्यहम् आ
पदुद्धरणार्थाय गृहाण द्विजसत्तम गणेशं प्रार्थयेत् अबुद्धमतिरिक्तं वा द्रव्यहीनं मया कृतम् तत्सर्वं पूर्णतां यातु विघ्नराज नमोऽस्तु ते ततो गां सोपस्कां
ठिं च आचार्याय दत्वा आशिषो गृहीत्वा इष्टजनैः सह भुंजीत इति संकष्टचतुर्थीव्रतम् श्रावणे कार्तिके वा शुक्लचतुर्थ्यां दूर्वागणपतिव्रतं भविष्ये नि
र्ध्याद्युल्लिख्य अतुलसौभाग्यपुत्रपौत्रधनैश्वर्याद्यभिवृद्धिद्वारा श्रीगणपतिप्रीत्यर्थं दूर्वागणपतिव्रतोद्यापनं करिष्ये तच्च पंचवर्षकं वर्षत्रयं वा का
र्यम् तत्र विधिः सर्वतोभद्रे रक्तवस्त्रवेष्टितताम्रकलशोपरि हेमपीठे हैमीं दूर्वां निधाय तत्र हैमं गणेशं पूजयेत् विशेषः पूजायाम् बिल्वापामा
र्गशमीदूर्वातुलसीपत्राणि मोदकनैवेद्यं प्रार्थनामंत्रः गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन प्रतिमादान-
मंत्रः गृहाण भगवन्ब्रह्मन् गणराज सदक्षिणम् व्रतं त्वद्वचनाद्यस्य संपूर्णं यातु सुव्रत एवं पंचवर्षाणि कृत्वा उद्यापनमारभेत् पूर्ववत्पूजयित्वा ग
ञाभिर्मंत्रैर्गणेशं पूजयेत् पंचगव्यस्नपनं दशमंत्राः गणाधिपाय॰ उमापुत्राय॰ अघनाशिने॰ विनायकाय॰ ईशपुत्राय॰ सर्वसिद्धिप्रदा
॰ एकदंता॰ इभवक्त्राय॰ मूषकवाहनाय॰ कुमारगुरवे॰ ततः व्रतपूर्तये आचार्याय गां दत्वा भुंजीत भाद्रपदशुक्लचतुर्थ्यां मध्याह्नव्या
पिन्यां सिद्धिविनायकव्रतम् माघे मार्गशीर्षे श्रावणे वा प्रतिमासं शुक्लचतुर्थ्यां प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने संकल्पं कृत्वा पूजयेत् देश-
लीः संकीर्त्य मम विजयपुत्रादिकामसिद्धिद्वारा श्रीसिद्धिविनायकप्रीत्यर्थं सिद्धिविनायकव्रतं करिष्ये धान्यराशिस्थरक्तवस्त्रवेष्टितारक्तकल

श्रोहैमंगणेशंपूजयेत् मूलमंत्रेण एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशांकुशधरंदेवंध्यायेसिद्धिविनायकम् ध्यानं० पुष्पोत्तरमंगपूजा ग-
णेशायनमः पादौपूजयामि विघ्नराजाय० जानुनी० आखुवाहनाय० ऊरू० हेरंबाय० कटिं० कामारिसूनवे० नाभिं० लंबोदराय० उदरं० गौरीसु-
नाय० स्तनौ० गणनाथाय० हृदयं० स्थूलकंठा० कंठं० स्कंदप्रियाय० स्कंधौ० पाशहस्ताय हस्तौ० गजवक्त्राय० मुखं० विघ्नहर्त्रे० नेत्रे० सर्वेश्वरा
य० शिरःपू० गणाधिपाय० सर्वांगंपू० अथपत्रपूजा सुमुखाय० पाचीपत्रसम० गणाधिपा० भृंगराजप० उमापुत्रा० बिल्वपत्रं० गजाननाय० दूर्वा
प० लंबोदरा० बदरीपत्रं० हरसूनवे० धत्तूरप० वक्रतुंडाय० शमीप० गुहाग्रजाय० अपामार्ग० एकदंताय० बृहतीप० विकटाय० करवीरप० विनायका०
अश्मांतकप० कपिलाय० अर्कप० गजदंताय० अर्जुनपत्रं० विघ्नराजाय० विष्णुक्रांतप० बटवे० दाडिमीप० सुराग्रण्ये० देवदारु० भालचंद्रा० मरुब
कप० हेरंबाय० सिंदूरप० चतुर्भुजा० जातीप० सर्वेश्वराय० अगस्तिप० ततःदूर्वायुग्मं गंधपुष्पाक्षतयुतं गृहीत्वापूजयेत् गणाधिपाय० उमा
पुत्रा० अघनाशिने० विनायकाय० ईशपुत्राय० सर्वसिद्धिप्रदाय० एकदंताय० इभवक्त्राय० मूषकवाहनाय० कुमारगुरवे० सर्वविघ्नहराय० ततो
देवंप्रार्थयेत् यन्मयाचरितंदेवव्रतमेतत्सुदुर्लभम् त्वत्प्रसादाद्गणेशत्वं सफलंकुरुसर्वदा घृतपाचितेक विंशतिमोदकान्गृहीत्वादशविप्राय दश
आत्मने एकंदेवाय० वायनमंत्रः वाणक फलसंयुक्तं मोदकैर्दशभिर्युतम् गणेशप्रीणनार्थायतुभ्यंविप्रददाम्यहं ततःब्राम्हपायसदक्षिणांविनायक
प्रतिमांदद्यात् तत्रमंत्रः विनायकगणेशानसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय एवंएकविंशतिवर्षक्रत्वांतेपूर्ववद्देवंसंपूज्य कु-
नाचार्यःअग्निप्रतिष्ठाप्य अन्वादध्यात् गणेशंदूर्वापायसलड्डुकैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिर्यक्ष्ये तत अधिकफलप्राप्तये एकविंशतिना

१ अपटाइतिख्यात २ रुई इतिख्यात.

मभिः एकविंशतिब्राह्मणान् दक्षिणापुरःसरं संपूज्य एकविंशतिपक्कान्नैः प्रत्येकं संपूज्य अन्यानपि यथाविभवं संपूज्य भूयसीं दत्वा व्रतपूर्तये
२० गां दद्यात् इति भविष्ये कार्तिककृष्णाचतुर्थ्यां करकचतुर्थीव्रतं भविष्ये स्त्रीणामेव तिथ्याद्युल्लिख्यात्मनः सौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्रा
प्तये करकचतुर्थीव्रतं करिष्ये पटादौ वटं विलिख्य तदधस्ताच्छिवं स्कंदयुतां गौरीं चंदनादिनालिखित्वा पूजयेत् मंत्रः नमः शिवायै सर्वायै सौ
भाग्यं संततिं शुभाम् प्रयच्छ भक्तियुक्तानां नारीणां हरवल्लभे इति नमोंतनाममंत्रेण शिवस्कंदगौरीणां पूजा कार्या पिष्टकनैवेद्यं पक्कान्नपू
रितदशकरकान् ब्राह्मणेभ्यो दद्यात् चंद्रोदयोत्तरं चंद्रायार्घ्यं दद्यात् व्रतपूर्तये गां दत्वा स्वयं भुंजीत अथ दशरथललिताव्रतोद्यापनम्
स्कांदे आश्विनकृष्णाचतुर्थ्यां तिथ्यादि संकीर्त्य मम पुत्रादिप्राप्तिपूर्वकसौभाग्याद्यभिवृद्धिद्वारा श्रीरोहिणीसहितचंद्ररूपी परमेश्वरप्री-
त्यर्थं दशवर्षावधि आचरितस्य दशरथललिताव्रतस्योद्यापनं करिष्ये इति संकल्प्य वृताचार्यः रात्रौ पुष्पमंडपिकामध्ये सर्वतोभद्रे पूर्ववत्कलशं
· थाप्य तदुपरि वंशपात्रे चतुरंगुलां सौवर्णीं रोहिणीप्रतिमां अष्टांगुलराजतचंद्रप्रतिमां च पूर्ववत् पूजयेत् प्रार्थयेच्च दशरथाय त्वया पूर्वं तार
द्याश्वसुताश्च ते सौभाग्यं ललिते देवि देहि तद्वन्ममापि हि पुष्पांतेऽगपूजा उपांगललितायै० पादौ पूजयामि उमायै० जानुनी० सत्यै० ना
भिं० कुमारिकायै० स्तनौ० लक्ष्म्यै० भुजौ० सुभगप्रियायै० मुखं० दशरथललितायै० मूर्धानं० ततः प्रातः पुनः संपूज्य अग्निं प्रतिष्ठाप्य उ
ध्यात् प्रधानं चंद्रसहितरोहिणीं गौरीमिमायेति मंत्रेण अष्टोत्तरशतदूर्वाहुतिभिः नमो देव्या इति मंत्रेण अष्टोत्तरशतघृताक्तपंचखाद्याहुतिभिश्च यक्ष्ये ब्र-
२० ह्मादिमंडलदेवताश्चैकैकयाहुत्या यक्ष्येन ततः सपत्नीकान् दश ब्राह्मणान् वस्त्रालंकारादिभिः संपूज्य गंधोदकपूरितदशकरकान् दद्यात् ततः आचार्यं वस्त्रादिभिः २०

१ धारगं इति प्रसिद्धा २ कलशान्.

संपूज्य सदक्षिणं वायनं दद्यात् तत्रमंत्रः इदंतु दशलड्डुकं दक्षिणाफलसंयुतं ललिताप्रीणनार्थाय ब्राम्हणाय ददाम्यहं विसर्जनमंत्रः सवाहनाश
क्तियुतावरदा पूजितामया मातर्मामनुगृह्याद्यगम्य तां निजमंदिरं इति विसृज्य सदक्षिणं सोपस्करं पीठं गांच दत्वा ब्राह्मणान् मोदक पायसादिभिः
संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत एवंयः कुरुते भक्त्या धनपुत्रानवाप्नुयात् इति दशरथललितात्रतोद्यापनं समाप्तं अथ पंचमीव्रतानि भाद्र
पद शुक्लपंचम्यां ऋषिपंचमीव्रतं मध्यान्हव्यापिन्यां दिनद्वये तद्व्याप्तावव्याप्तौवा पूर्वविद्धायां कार्यम् नद्यादौ प्रातः दंतधावन पूर्वकं स्नात्वा मम-
ज्ञानतो ज्ञानतोवा रजस्वलावस्थायां कृतसंपर्कजनितदुर्मानित्व दोषपरिहारद्वारा शुभफलप्राप्त्यर्थं आचरितऋषिपंचमीव्रतोद्यापनं करिष्ये
इत्याचार्यः सर्वतोभद्रे सप्तकलशेषु एकस्मिन्वाहेमीः अरुंधतीसहिताः सप्तर्षिप्रतिमाः पूजयेत् प्रत्येकं सप्तर्षीणां वेदोक्तमंत्राः ऋषयः सप्तकृतां
स्तोमैरिति कश्यपम् अत्रिर्यद्वामवेति अत्रिं एवानस्तूधइति भरद्वाजम् प्रसूतो भक्ष मकरंचरेति विश्वामित्रं अभित्वागोतमा गिरेति गौतमं गृ
णानाजमदग्निनेति जमदग्निम् उतासिमैत्रावरुणोवासिष्ठेति वसिष्ठं कश्यपोत्रिर्भरद्वाजो विश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्च साध्वीचैवाप्यरुं
धतीति देवाएतस्येति सहस्तोमाः सहच्छंदस इति नाममंत्रैर्वा पूजयेत् ततः वायनं दत्वा क्षमापयेत् न्यूनातिरिक्तकर्माणि मयायानि कृतानि च
क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः ततः कथाश्रवणादिना रात्रिं निनयेत् प्रातः अग्निं प्रतिष्ठाप्य अन्वादध्यात् प्रधानं अरुंधती सहित कश्य-
पादि सप्तर्षीन् पूजामंत्रेण तिल व्रीहि यव सर्पिर्द्रव्यैः प्रतिद्रव्यमष्टोत्तरशतमष्टाविंशति र्वा तत्संख्याकाहुतिभिः ब्रम्हादिदेवताश्च एकैकयाज्या
हुत्या यक्ष्ये शेषेणस्विष्टकृतं ततः प्रतिमा पूजां कृत्वा सपत्नीकान् सप्तब्राम्हणान् वस्त्रादिना संपूज्य नेभ्यः क्रमेण दक्षिणा प्रतिमायुतकलशान् द-

द्यात् तत्रमंत्रः गृहाणत्वं द्विजश्रेष्ठ प्रतिमादिसमन्वितम् कलशं ऋषिसंप्रीत्यै व्रतसंपूर्तिहेतवे यद्येककुंभे सर्वप्रतिमापूजनम् तदा सर्वप्रतिमायुतं कलशमाचार्या
यदद्यात् अन्येभ्यः दक्षिणावस्त्रयुतान् पक्वान्नपूरितान् कलशान्दद्यात् ततःसभ्यः ससगा आचार्याय एकांगांदत्वा प्रार्थयेत् ससर्षपः शुभाः श्रेष्ठाः सर्वेषां
चशुभप्रदाः सर्वपापंचमेग्रंतु ज्ञानतोऽज्ञानतः कृतम् एतेसर्षपः सर्वेभक्त्यासंपूजितामया यथोक्तफलदाः संतु व्रतस्यफलदायकाइति ततः आशिषोगृहीत्वाब्रा
ह्मणान्संतर्प्य स्वयंभुंजीत अथभविष्ये नागपंचमीव्रतं श्रावणशुक्लपंचम्यां माध्यान्हव्यापिन्यांकार्यम् नद्यादौस्नात्वा तिथ्याद्युल्लिख्य ममसंतानवृद्धि
र्वकंसुखाद्यभिवृद्धिद्वारा श्रीनागरूपीपरमेश्वरप्रीत्यर्थं नागपंचमीव्रतंकरिष्ये पटेचंदनादिनानागान्विलिख्य मृन्मयान्वाकृत्वा दधिदूर्वाक्षतकुशा
ैभिः संपूजयेत् अनेनमंत्रेण अनंतंवासुकिंशेषं पद्मनाभंमहाबल कालियंतक्षकंचैव कर्कोटकधनंजयौ एवंसंपूज्य विप्रेभ्यो भोजनंदत्वास्व
यंतैलपक्वविवर्जितंभोजनंकृत्वा रात्रौतद्ध्यानरतःस्वपेत् भाद्रशुक्लपंचम्यांनागपंचमीव्रतम् प्रभासखंडेचतुर्थ्यामेकभक्तंकृत्वा पंचम्यांप्रातः
स्नातःदेशकालौसंकीर्त्य ममसंतत्यभिवृद्धिपूर्वकं सौभाग्यवृद्धिद्वारा श्रीनागरूपीपरमेश्वरप्रीत्यर्थं द्वादशवर्षात्मकं नागपंचमीव्रतंकरिष्ये ततः
सौवर्णराजतंदारुमयं मृन्मयंवापंचफणंनागंकृत्वा करवीरशतपत्रजातीपुष्पपद्मगंधादिभिः संपूज्य ब्राह्मणान्घृतपायसैः संतर्प्यस्वयंन
क्तंकुर्यात् एवंप्रतिमासंमासनामानि अनंतंवासुकिंशेषंपद्मंकंबलमेवच तथाकर्कोटकंनागंनागमश्वतरंतथा धृतराष्ट्रंशंखपालं
कालियंतक्षकंतथा पिंगलंचमहानागंमासिमासिप्रकीर्तिताः एवंद्वादशवर्षसंपाद्यांते भारपरिमितसुवर्णनागंसंपूज्य व्यासरूपिणेब्राह्म-
णायपूजापूर्वकंदद्यात् अंतेपायसादिनाब्राह्मणान्संतर्प्य स्वयंभुंजीत अत्रैवनागदष्टव्रतं हेमाद्रौभविष्ये चतुर्थ्यामेकभक्तंकृत्वा प्रातः

१ भारप्रमाणं चतुर्भिर्व्रीहिभिर्गुंजंगुंजान्पंचपणंपणान्॥ अष्टौधरणमष्टौचकर्षंतांश्चतुरःपलं॥ तुलांपलशतंप्राहुर्भारःस्याद्विंशतिस्तुलाइति॰

पञ्चम्यांस्नात्वा तिथ्याद्युल्लिख्य अस्मत्संबंधिनो नागदंशमरणसूचित सर्पयोनिमुक्तिपूर्वकं तस्य स्वर्गनिकामनया एकवर्षात्मकं नागदष्टपंचमीव्रतं करिष्ये
तत सौवर्णराजतंमृन्मयंवा पंचफणानागंनिर्माय क्षीरादिस्नपनपूर्वकं षोडशोपचारैः संपूज्य घृतपायसमोदकैः ब्राम्हणान् संतर्प्य स्वयंनक्तंकुर्यात् प-
चम्यानक्तं एवप्रतिमासं पचम्याकार्यम् मासनामानि पूर्वोक्तानि अनंतादीनि ग्राह्याणि संवत्सरांते रत्नचित्रितं कांचनंनागं सर्वतोभद्रस्थ कलशे
संस्थाप्य पूर्ववत् पूजयित्वा रात्रौजागरणंकृत्वा षष्ठ्यां प्रातः संपूज्य कथावाचकाय सोपस्करं पीठं गांच दद्यात् तत्रमंत्रः दानकाले पठेदेत-
त्स्मरन्नारायणप्रभु सर्वगंसर्वधातारं अनंतमपराजितम् येकेचिन्मेकुलेसर्पदष्टाः प्राप्तास्त्वधोगतिं व्रतदानेनगोविंद मुक्तिभाजोभवंतुते इत्युक्त्वासि
तचंदनाक्षतयुतमुदकं उदके निक्षिपेत् ततः ब्राम्हणानां यतीनांच नागानुद्दिश्य महाभोज्यंदत्वा आशिषो गृहीत्वा स्वयंभुंजीत एवंव्रतेकृते नागदंशमृतः स
र्पयोनिमुक्तोभवति आश्विनशुक्लपचम्यां माध्यान्हव्यापिन्यां उपांगललिताव्रतम् प्रातः दंतधावनपूर्वकं नद्यादौस्नात्वा शुक्लंवासः परिधाय मंडपि
कादिकंकृत्वा तिथ्यादिसंकीर्त्य मयापुत्रपौत्रविद्यारोग्यसुखविजयपुष्ट्यादिकामेन उपांगललिताप्रीत्यर्थं अष्टवर्षात्मकाचरितोपांगललिताव्रतोद्याप
नंकरिष्य इतिसंकल्प्य वृताचार्यः एकलिंगतोभद्रे कलशोपरि सौवर्णीललिताप्रतिमां पौराणमंत्रैः श्रीसूक्तेनच पूजयेत् ध्यानम् नीलकौशेयवस-
नां हेमाभांकमलासनाम् भक्तानांवरदांनित्यंललितांचिंतयाम्यहं पुष्पपूजांते उपांगललितायै० पादौपूज० भवान्यै० गुल्फौ० सिद्धेश्वर्यै० जंघे०
श्रियै० ऊरू० विश्वरूपिण्यै० कटिं० देव्यै० नाभिं० वरदायै० कुक्षिं० शिवायै० हृदयं० वागीश्वर्यै० स्कंधौ० महादेव्यै० बाहू० प्रकृतिभद्रायै०
करौ० पद्मिन्यै० कंठं० सरस्वत्यै० मुखं० पद्मकेसरवासिन्यै० नासिकां० महिषमर्दिन्यै० नेत्रे० लक्ष्म्यै० कर्णौ० भवान्यै० ललाटं० विंध्यवासिन्यै०

: ॰ सिंहवाहिन्यै॰ सर्वांगपू॰ ततोधूपादिकं॰ पुष्पांजल्यंते साग्रामष्टचत्वारिंशत्पर्वपरिमितांदूर्वांहस्तेनादाय बहुप्ररोहासततममृतादहरितालताय
थेयंललिते मातस्तथामेस्युर्मनोरथाः इतिमंत्रेणार्पयेत् एकैकामेववाष्टचत्वारिंशद्वारंसमर्पयेत् ततःप्रदक्षिणनमस्कारः कथाश्रवणादिनारात्रौ
जागरणंकृत्वा प्रातःनित्यकर्मनिर्वर्त्यपुनः संपूज्य देव्यै अष्टौवटकान्समर्प्य अग्निंप्रतिष्ठाप्य अन्वादध्यात् प्रधानं उपांगललितांगौरीर्मिमायेतिमंत्रेण
अष्टोत्तरश : नमोदेव्यैमहादेव्यैशिवायैसततंनमः नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतामनेनमंत्रेणअष्टोत्तरशततिलसर्पिः पंच-
५ ब्रम्हादिमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये एवंहोमंसंपाद्यअष्टौब्राम्हणान्वस्त्रादिभिः संपूज्य तेभ्यः पक्कान्नपूरि-
६ अष्टौकलशान्दद्यात् ततःआचार्यंवस्त्रालंकारादिभिः संपूज्यसदक्षिणंविंशतिवटकसहितंवायनंदद्यात् तत्रमंत्रः पक्कान्नेफ
उपांगललिताप्रीत्यैब्राम्हणायददाम्यहम् ततःदेवींविसर्जयेत् मंत्रः सवाहनाशक्तियुतावरदापूजितामया मातर्माम-
एवंविसृज्यसोपस्करंपीठंगांचआचार्यायदत्वा ब्राम्हणान्सदन्नेनभोजयित्वा आशिषोगृहीत्वास्वयंविंशति
इतिस्कांदे ललिताव्रतोद्यापनं इतिश्रीमच्चित्तपावन॰ पंचमीव्रतानिसमाप्तानि अथषष्ठीव्रतानि भाद्रशुक्लषष्ठ्यां
प्रातःनारीनद्यांस्नात्वा शुक्लांबरासुवेषाभरणोपेतावंशपात्रेनद्याः पंचपिंडाकृतिवालुकाःसंगृह्य गृहमागत्यपीठंदोस
कंसौख्याभिवृद्धिद्वाराश्रीललिताषष्ठीप्रीत्यर्थंललिताषष्ठीव्रतंकरिष्ये ध्यानादिभिःपूजयेत् पं
तरशतंअष्टाविंशतिवासंगृह्यसमर्प्यसोहालिकाकरंजगुडवेष्टकर्णवेष्टमोदकादिभिर्नैवेद्यंप्रतो

न्यसेत् कूष्माण्डनारीकेलत्रपुसदाडिमबीजपूर तुंडीर कोरवेल्लादि तत्कालसंभूतैः फलैः शोभां कृत्वा धान्यराशिस्थदीपावलिभिः समंततः भूषयेत् एवं पूजां समापयेत् प्रार्थयेच्च ललिते ललिते देवि सौख्यसौभाग्यदायिनि अनंतं देहि सौभाग्यं मह्यं तुभ्यं नमो नमः ततः रात्रौ गीतवाद्यादिभिर्मेषोन्मेषरहितं सखीभिः सह जागरणं कृत्वा सप्तम्यां प्रातः ततः सर्वं नदी प्रति नीत्वा गंधपुष्पाक्षतादिभिरभ्यर्च्य ततः सर्वं नैवेद्यादि विप्राय दत्वा गृहमागत्य अग्निं प्रतिष्ठाप्य अष्टोत्तरशतं दूर्वा तिल घृत पंचखाद्य युत पायसं च हुत्वा देवपितृमनुष्यान् सुवासिनी कन्यकाश्चालंकारादिभिः पंचदश ब्राह्मणांश्च वस्त्रादिभिः संपूज्य गां च दत्वा बहुविधभक्ष्यभोज्यैः संतर्प्य ललिता मे अस्तु समीतेति संप्रार्थ्य स्वयं भुंजीतेति अथ कपिलाषष्ठीव्रतम् हेमाद्रौ भविष्ये भाद्रकृष्णषष्ठ्यां कपिलाषष्ठीव्रतम् तच्च पूर्वापरयुतायां कार्यम् योगविशेषेण योगलक्षणं पुराणसमुच्चये भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते पाते कुजे च रोहिण्यां सा षष्ठी कपिला स्मृता संयोगे च चतुर्णां च निर्दिष्टा परमेष्ठिनेति वाराहपुराणेपि नभस्ये कृष्णपक्षे तु रोहिणी यात भूसुतेः युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् कपिलां तु द्विजाग्र्याय दत्वा क्रतुफलं भवेत् एवं षष्ठी यदा तदा पंचम्यां एकभुक्तं कृत्वा षष्ठ्यां प्रातः दंतधावनं कृत्वा जलपूर्णांजलिं कृत्वा निराहारो द्य देवेश भूत्वहं क्त स्त्वत्परायणः पूजयिष्यामि अहं भक्त्या शरणं भव भास्कर इत्यर्घ्यं दत्वा नद्यादौ गत्वा नन्नदारु शीरकुकु मेलोमनः शिलापद्मक पत्रक यष्टिमधु गव्यानां पेषणं कृत्वा क्षीरेण लोड्य कल्केन स्नानं कार्यमनेन मंत्रेण आपस्त्वमसि देवेश ज्योतिषां पतिरेव च पापं शयमे देव मनोवाक्कायकर्मजम् ततः पंचगव्यस्नानं ततः पंचपल्लवैर्मार्जनम् ततः शुद्धमृत्तिकां गृहीत्वा स्नायादनेन मंत्रेण मृत्तिके ब्रह्मदत्तासि कश्यपेनाभिमंत्रिता पवित्रं कुरु मां नित्यं सर्वपापात्समुद्धरेति ततः वरुणं पूजयेत् पूजामंत्रः पाशाग्रहस्त वरुण सर्ववारीश्वर प्रभो

१ नोडली इति प्रसिद्धा २ कारलीति प्रसिद्धा ३ देवदारु इति प्र० ४ वाळा ५ वेलची ६ ज्येष्ठमध इति प्रसिद्धाः

अद्याहं प्रार्थयामि त्वां व्रतं कुरु सुरेश्वर ततः स्नात्वा तिलकं धृत्वा भास्करं प्रणमेत् आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः प्रभाकरो मितो
वीरो देवः सर्वेश्वरो हरिः ततो गृहमागत्य तिथ्यादि संकीर्त्य मम अशेषपापक्षयपूर्वकरूपसंपदारोग्यविपुलसंततिस्वर्गलोकप्राप्तिद्वारा सर्वाव-
भासक सर्वतेजोमयश्रीसूर्यनारायणप्रीत्यर्थं कपिलाषष्ठीव्रतं करिष्ये तदंगं पुण्याहवाचनादि कृत्वा ततो वृताचार्यः स्वयं वा गोमयेनोपलिप्तायां
भूमौ कुंकुमेनाष्टदलपद्मं विधाय तदुपरि सर्वतोभद्रे कलशोपरि रक्तवस्त्रेष्टपत्रं सकर्णिकं पद्मं कृत्वा तत्र पूर्वादिक्रमेण देवता आवाहयेत् सूर्यं० भा-
स्करं० स्वर्णरेतसं० रविं० आदित्यं० दिवाकरं० प्रभाकरं० सूर्यं० तीव्ररश्मिधरं० मध्ये आधाररूपिणं वरुणं न्यसेत् तदुपरि सप्ताश्वभूषितं सौवर्णं र-
थं तत्राग्रतः सौवर्णमरुणं सारथिं कृत्वा रक्तपुष्पैः स्रग्गंधैश्च पूजयेत् मंत्रः विनतातनयो देवः कर्मसाक्षी सुरेश्वरः सप्ताश्वः सप्तरज्जुश्च अरुणो मे
प्रसीदतु एवं अरुणं संपूज्य रथोपरि सौवर्णीं सूर्यप्रतिमां आकृष्णेनेति मंत्रेणावाहयेत् परितः दीप्तादिशक्तीर्न्यसेत् ताश्च दीप्ता सूक्ष्मा भद्रा विनीता
मला अनघा अमोघा वैद्युता सर्वतोमुखी ततो ध्यात्वासनं संपाद्य ततः करवीरार्करक्तपुष्पचंदनचंपकपुष्पस्रग्गंधकुंकुमकुसुमयुतं पात्रं हस्ते-
नादाय जानुभ्यामवनिं गत्वार्घ्यं निवेदयेत् अनेन वेदगर्भ नमस्तुभ्यं वेदगर्भ नमोस्तु ते अव्यक्तमूर्तये तुभ्यं गृहाणार्घ्यं नमोस्तु ते ब्रह्ममूर्तिधराय
चतुर्वक्त्र सनातन सृष्टिस्थितौ संस्थिताय गृहाणार्घ्यं नमोस्तु ते विष्णुरूपधरो देवः पीतवस्त्रश्चतुर्भुजः प्रभवः सर्वलोकानां गृहाणार्घ्यं नमो
कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः जन्ममृत्युजराशोकसंसारभयनाशनः दारिद्र्यव्यसनध्वंसी श्रीमान् देवो दिवाकरः हरिदश्वोंशु २
मा च गृहाणार्घ्यं नमोस्तु ते चतुर्भिर्मूर्तिभिः साकं अष्टाभिः परिगीयते सामध्वनिस्तु तो ज्ञेयो गृहाणार्घ्यं नमोस्तु ते ततः पुष्पपूजांते अंगपूजा

भास्करायनमः शिखांपूजयामि सूर्याय॰ ललाटंपू॰ भानवे॰ चक्षुषीपू॰ रवये॰ मुखं॰ भानुमते॰ कंठं॰ पद्मगर्भाय॰ हौहस्तौ॰ तिमिरक्षयकृते॰
स्तनौ॰ जातवेदसे॰ नाभिं॰ भानवे॰ कटिं॰ उग्ररूपाय॰ गुह्यं॰ तेजोरूपाय॰ जघे॰ स्थूलसूक्ष्मगुणरूपाय॰ पादौपू॰ ततः पूजासमर्थ्यप्रार्थये
त् अग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे इषेचेवनमस्तुभ्यमग्नयेचनमोनमः आत्मरूपिन्नमस्तुभ्यंविश्वमूर्तेनमोनमः त्वंब्रम्हात्वंचविष्णुश्चत्वं
धातात्वंहुताशनः मुक्तिकाममभीप्स्यामि प्रार्थयामिस्फुरेश्वरेतिनमस्कारंकुर्यात् ततःसंवर्चसेतिमंत्रेणपाणिभ्यांतोयेनमुखंसंमृज्य हंसःशुचि
षदित्यृचोसूर्यमालोक्य उदुत्यंचित्रंदेवानामितिसूक्तेदेवाग्रतोजपेत् ततःपूर्वंफलपुष्पाक्षतांनानाविधभक्ष्यैःफलकंकृत्वातत्रशुभदेशेशय्यांप्रक
ल्पयेत् ततःलवणाचलोपरिरौप्यमयंखड्गहस्तंवस्त्रयुगच्छन्नंसंस्थाप्यपूजयेत् मंत्रः नमस्तेक्रोधरूपायखड्गहस्तजिघांसते जिघांसुकाम-
त्वांहृष्ट्वादुद्रुवुःसर्वदेवताः त्वयाव्याप्तंमेरुपृष्ठंचंडभास्करसुप्रभं अतस्त्वांपूजयिष्यामिगृहाणार्घ्यंनमोस्तुते ततस्तांरात्रिमतिवाह्यप्रातःशुचिः
सूर्यंपुनःस्नात्वादेवंसंपूज्य अग्निंप्रतिष्ठाप्यअन्वाद्ध्यात् प्रधानं श्रीसूर्यं अर्कसमिद्भिः घृताक्ततिलैः सिद्धचरुणा घृतेनचप्रतिद्रव्यमष्टोत्त
रशतसंख्याकाहुतिभिः आकृष्णेनेतिमंत्रेणव्याहृतिभिर्वायक्ष्ये पीठावरणदेवताः ब्रम्हादिदेवताश्चआज्याहुत्यायक्ष्ये ततःस्विष्टकृतं एवंहो
मंसंपाद्य ततःपूर्वोपस्करसहितांकपिलांगांउक्तप्रकारेणसंपूज्यप्रार्थयेत् कपिलेसर्वदेवानांपूजनीयासिरोहिणि सर्वतीर्थमयीयस्मादतःशां-
तिंप्रयच्छमे ततः आचार्यपूजनंकृत्वा ततः तद्धस्तेगोभूहिरण्यवासोव्रीहिलवणातिलान्दत्वाकपिलांप्रार्थयेत् कपिलेपुण्यकर्मासिनिष्पाद्येपु
ण्यकर्मणि मांसमुद्धरदीनंचददतोत्यक्षयंकुरु ब्रम्हणोत्पादितादेविअग्निकुंडात्सुप्रभा नमस्तेकपिलेपुण्ये सर्वदेवनमस्कृते जयनित्यंमहास

ले सर्वतीर्थादिमंगले दातारंस्वजनोपेतंब्रम्हलोकंनयाशुवै ततः प्रदक्षिणांकृत्वा आचार्यहस्ते सोपस्करं सदक्षिणं पीठंगांच दद्यादनेनमंत्रेण
दिव्यमूर्तिर्ज्जगच्चक्षुर्द्वादशात्मा दिवाकरः कपिलासहितोदेवो ममसुक्तिंप्रयच्छतु तस्मात्त्वंकपिलेपुण्या सर्वलोकस्यपावनी प्रदत्तासहसूर्ये-
प्रदाभव ततः अन्यब्राम्हणान्संपूज्य अन्नादिनासंतर्प्य आशिषोगृहीत्वासुहृद्युतोभुंजीत आरोग्यरूपसौभाग्य सर्वदुःख
अंतेगोलोकंगच्छतीतिहेमाद्रौस्कांदेकपिलाषष्ठीव्रत अथसर्वासुषष्ठीषुस्कंदषष्ठीव्रतम् हेमाद्रौभविष्ये यस्यांकस्यांचित्षष्ठ्यां प्रा-
शकालौसंकीर्त्य ममसत्कुलादिजन्मप्राप्तिपूर्वकंऐहिकविद्यालक्ष्मीसुखाद्यभिवृद्धिद्वारा श्रीस्कंदप्रीत्यर्थंस्कंदषष्ठीव्रतंकरिष्ये ततः
पीठेसंस्थाप्य पूजयित्वा दधिघृतपुष्पाक्षतयुतमर्घ्यंदद्यादनेनमंत्रेण सप्तर्षिदारज[1] स्कंद सेनाधिप[2] महाबल रुद्रोमाग्निजषड्वक्त्र
प्रीयतांदेवसेनानीः संपादयतुहृद्गतम् एवंपूजांकृत्वा रात्रौ भूमिभोजनंकृत्वा तैलपक्वविवर्जितंभोजनंकुर्यात् शक्तोसप्ताहमुपोषणंवाकु
एवंशुक्लासुकृष्णायांच षष्ठ्यांकार्यम् सर्वाभीष्टसिद्धिः इतिश्रीमच्छांकर्यांव्रतोद्यापनकौमुद्यां षष्ठीव्रतानि अथसप्तमीव्रतानि श्राव
शुक्लसप्तम्यांमध्यान्हव्यापिन्यां शीतलाव्रतम् हेमाद्रौभविष्ये तद्विधिः मासपक्षाद्युल्लिख्य ममवैधव्यदारिद्र्यभर्तृवियोगनाशनपूर्व-
कपुत्रसौख्यधनधान्यप्राप्तयेशीतलाव्रतमहंकरिष्ये तदंगंपूजनंकरिष्ये ततः धान्यराश्युपरि कलशेसुवर्णादिनिर्मितांशीतलाप्रतिमांनाम
मंत्रैः पूजयेत् ध्यानंस्कांदे वंदेहंशीतलांदेवींरासभस्थांदिगंबराम् मार्जनीकलशोपेतांशूर्पालंकृतमस्तकामिति ततोऽर्घ्यंदद्यात् मं-
त्रः शीतले दहमेपापंपुत्रसौख्यप्रदेनमः श्रावणस्यसितेपक्षेगृहाणार्घ्यंनमोस्तुतेइत्यर्घ्यं दधिघृतमिश्रपक्वान्ननैवेद्यं ततः सप्तसुवासिनि

[1] सप्तर्षीणांदाराः स्त्रियः तेभ्योजात [2] सेनाधिपतिः

९ थांश्चुत्वा ताभिः सह भुंजीत अथ भाद्रशुक्लसप्तम्यां मुक्ताभरणव्रतं हेमाद्रौ सलिलाशये स्नात्वा गृहमागत्य गोमयादिलिप्ते शुद्धदेशे
च मंडलं विधाय तदुपरि चंदनादिना उमासहितं शिवं लिखित्वोक्त प्रकारेण पूजयेत् देशकालौ संकीर्त्य ममसकल पापक्षयपूर्वकं पुत्रपौत्रधन धान्य सौ-
ख्यातिशय प्राप्ति द्वारा श्रीसदाशिवप्रीत्यर्थं मुक्ताभरणसप्तमीव्रतं करिष्ये इतिसंकल्प्य पूर्वोक्त प्रकारेण पूजां समाप्य प्रार्थयेत् महादेव महाराज प्री-
त्या पापप्रणाशन अस्माकं कुर्वतां पूजां साधुवासाधु योजिताम् ज्ञानतोऽज्ञानतो वापि भवतीह व्रते तु नत् संपूर्णा यातु विश्वेश दीर्घायुः पुत्रदो भव ततः देव
स्य पुरतः यावज्जीवं मयात्मा तु शिवस्य चानिवेदितः इत्येवं समयं कृत्वा सौवर्णं राजतं सौत्रं वा दोरकं देवाग्रतः संपूज्य अनेन दोरकं गृह्णीयात् देव
४ थ सर्वसौभाग्यदायक गृह्णीयां दोररूपं त्वां पुत्रपौत्रप्रवर्धनम् ततः हस्ते बंधनमंत्रः सप्तसाम्नोपगीतं त्वां धारयामि जगद्गुरो सूत्र
ने स्थितं नित्यं धारयामि स्थिरो भवेत्यनेन मंत्रेण हस्ते बध्वा ततः दह सर्वाणि पापानि तुष्टिं कुरु दयानिधे प्रसन्नः सन्तु माकांत दीर्घायुः पुत्रदो भव
२ ते जीर्णदोरकोत्तारणं कृत्वा ब्राह्मणाय एकादशशत संख्याकान् मंडकान् घृत दक्षिणायुतान् वायनं दत्वा तदेव द्रव्यं स्वयं भुंजीत एवं प्रतिमासं
शुक्लसप्तम्यां कार्यम् वर्षांते हैमीं राजतीं वा मुद्रिकां ताम्रपात्रोपरि संस्थाप्य ब्राम्हणेभ्यो दद्यात् आचार्याय विशेषेण सौवर्णमंगुलीयकं पुष्पकुं
कुम तांबूलाजन सूत्रयुतं सदक्षिणां गां च दद्यात् ब्राम्हणान् भोजयित्वा स्वयं भुंजीत संतानवृद्धिं लब्ध्वा तु शिवलोके महीयते अथ माघशुक्लसप्त
म्यां रथसप्तमीव्रतं हेमाद्रौ भविष्ये षष्ठ्यां प्रातः शुक्लतिलैः नद्यादौ स्नात्वा देवादीन् पूजयित्वा सूर्यालयं गत्वा सूर्यं नमस्कृत्य गंधपुष्पाक्षतैः
संपूज्य स्वगृहमागत्य अतिथींश्च संभोज्य विद्यमान दिने तैलवर्जितं स्वयमश्नीयात् रात्रौ विप्रं समाहूय संपूज्य नियमं कुर्यात् सप्तम्यां तु निराहारो भूत्वा

भोगविवर्जितः भोक्ष्येहम्यांजगन्नाथनिर्विघ्नंतत्रमेकुरु इत्युच्चार्यतोयंनिक्षिपेत् ततः विप्रंविसृज्यभूमौस्वपेत् ततः सप्तम्यांप्रातः अरु-
णोदयवेलायांहरिद्रामलकचूर्णमृत्तिलैश्चसहस्नात्वाकृतावश्यकः सौरसूक्तंजप्त्वागोमयेनोपलिप्तायांभूमौनदीतीरे गृहांगणेश्वत्थमूलेतुल
सीमूलेवावस्त्रादिनामंडपंकृत्वातन्मध्येवेदिकांतदुपरिधातुनाकुंकुमेनवाष्टदलंविधायतदुपरिआरक्तवस्त्रंप्रसार्य उपरिएकचक्रंहयान्वितंसो-
पस्करंसौवर्णंराजतंवारथंसंस्थाप्यतत्रसौवर्णींसूर्यप्रतिमामावाह्य ध्यानम् द्विभुजंशंखचक्राढ्यंपद्मासनसमन्वितम् मुहूर्तसमये
सम्यक्ध्येयंनारायणंप्रभुं रक्तगंधारक्तपुष्पगुग्गुलागरुधूपकाः परमान्नंनैवेद्यं एवंषोडशोपचारैःसंपूज्यतदग्रेधातुनारजनीचूर्णेनवाष्ट-
दलपद्मंविरच्य पूर्वादिक्रमेण रविं० आदित्यं० सवितारं० मित्रं० खगपतिं० सूर्यं० भास्करं० दिवाकरं० मित्रं० संपूज्य० मध्येनारायणं
पूजयित्वा भक्तिहीनंक्रियाहीनंमंत्रहीनंजगत्पते प्रसादात्तवसंपूर्णमर्चनंयदिहास्तुमे इतिसंप्रार्थ्य षण्मुहूर्तेरवौप्राप्तेसति दक्षिणं
शिरोधौतवस्त्रेणाच्छाद्य यावदुल्लंघ्यभास्करोगच्छेत्तावत्स्वपेत तदायदिच्छयारविंप्रार्थयेत्तत्स्वप्नेसूर्यःमनोभिलषितंकथयेत् ततःउत्थाय-
प्रवालमुक्ताफलंसहितघृतेनलेपितगर्भंहाटकपूर्णंदुकूलवेष्टितंसदक्षिणताबूलंकूष्मांडंदद्यात् तदभावेमातुलिंगंदेयम् अकिंचनेनसप्ता
रथिरथंपंचवर्णकेर्निर्मायसौवर्णींप्रतिमांपूर्ववदर्चयेत् ततोरात्रौजागरणंकृत्वाप्रातःतत्सर्वंगुरवेदत्वागांचदद्यात् ततःइष्टजनैःसहभुंजीत एवं
इहपुत्रपौत्रानुत्पाद्यसूर्यलोकंयास्यति अत्रैवस्नानं अरुणोदयेसप्तार्कपर्णानिबदरीपत्राणिचशिरसिनिधायस्नात्वाप्रार्थयेत् यद्यज्जन्मकृ २
तंपापंमयासप्तसुजन्मसु तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी स्नानानंतरमर्घ्यं सप्तवाहश्वानिप्रीतसत्यलोकस्यदीपन सप्तम्यासहितोदेवगृ

१ पायसम् २ हरिद्राचूर्णेन ३ सुवर्णपूर्णं ४ मकरसंबन्धिनी

हाणार्घ्यंदिवाकरेतिवाप्रार्थना जननीसर्वभूतानांसप्तमीसप्तकेतिथिः सप्तव्याहृतिकेदेविनमस्तेसूर्यमंडले इतिभविष्योक्तस्नानादिविधिः
माघशुक्लसप्तम्यामचलासप्तमीव्रतम् तत्रमाघशुक्लषष्ठ्यांप्रातःस्नात्वादेशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकरूपसौभाग्यसर्वकाम
ल्प्राप्तिद्वाराश्रीसूर्यनारायणप्रीत्यर्थंअचलासप्तमीव्रतंकरिष्ये इतिसंकल्प्यभास्करंसंपूज्यस्वयंएकभुक्तंकुर्यात् ततःसप्तम्यांअरु-
णोदयेस्वगंभीरंजलाशयंतडागंदेवखातंसरितंवाकेनचिन्नचालितंयावत्तावद्गत्वा प्रथमंसौवर्णेराजतेअलाबुमयेवापात्रेतैलवर्तियुतंकु-
सुमभूषितंदीपंसंस्थाप्यतत्पात्रंशिरसिधृत्वा हृदयेभास्करंध्यात्वाइमंमंत्रमुदीरयेत् नमस्तेरुद्ररूपायरसानांपतयेनमः वरुणायनम-
स्तेस्तुहरिवासनमोस्तुत इत्युक्त्वाजलेदीपंपरिहरेत् ततःस्नात्वादेवताःसंतर्प्यतत्तीरेचंदनेनाष्टदलंपद्मंविरच्य तत्रपूर्वादिक्रमेण रविं०
भानुं० विवस्वंतं० सवितारं० अर्कं० सहस्रकिरणम् सर्वात्मानं० मध्यउमायुतंशिवंप्रणवयुतंचसंस्थाप्य संपूज्यविसृज्यस्वगृहमा
८ ताम्रपात्रेथवामृन्मयेघृतगुडयुतंतिलपिष्टं सौवर्णेअशक्तौतिलपिष्टजंवातालपत्रंरक्तवस्त्रेणाच्छाद्यसंपूर्णंब्राह्मणद्वाराचालयेत्
ततःब्राह्मणंसंपूज्यतत्सर्वंनिवेदयेत् समग्रंदिनंहृदिभास्करंध्यायन्भुंजीत रूपसौभाग्यवतीस्यात् अस्यामेवपुत्रसप्तमीव्रतम् आ
दित्यपुराणे षष्ठ्यांप्रातःस्नात्वा तिथ्यादिसंकीर्त्य ममसद्गुणयुतपुत्रप्राप्तिपूर्वकपौत्राद्यभिवृद्धिद्वाराश्रीसूर्यनारायणप्रीत्यर्थंपुत्रसप्त
मीव्रतंकरिष्ये इतिसंकल्प्य ततःसूर्यंश्वेतमाल्यांबरलेपनैःसंपूज्यउपोषणंकृत्वाभूमौस्वपेत् ततःपुनरुत्थायस्नात्वापुनःसूर्यंपूजयि-
त्वाग्निहोत्रहोमंकुर्यात् दध्योदनेनपयसापायसेनद्विजान्संतर्प्य भुंजीत एवंपक्षद्वयेपि कृष्णेविशेषः रक्तोत्पलरक्तपुष्पैःपूजनम् एवंसंव

प्र॰
२६

त्सरपर्यंतंकृत्वापुनर्भासिभिर्भवेत् इतिश्रीमच्छंकरविरचितायां व्रतोद्यापनकौमुद्यां सप्तमीव्रतानि अथाष्टमीव्रतानि बुधयुक्तायांशुक्लाष्टम्यांबुधाष्टमीव्रतम् तत्रसप्तम्यां संकल्पपूर्वकं दंतधावनादिकृत्वादशविप्रान्निमंत्र्य अष्टम्यांप्रातः गंगादितीर्थेस्नात्वादेशकालौसंकीर्त्य ममइहजन्मनिजन्मांतरेचबाल्यादारभ्य कर्मणामनसाजानताजानतावास्वर्णाद्यपहृतदोषपरिहारपूर्वकं पुत्रपौत्रादिसकलमनोरथप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंमयाआचरितंबुधाष्टमीव्रतोद्यापनंकरिष्ये तदंगंपुण्याहवाचनादिकृत्वाचार्यः रंगवल्यादिविराजितदेशेसर्वतोभद्रमंडलोपरि पंचप्रस्थकलशेपूर्णपात्रोपरि पंचवर्णैरष्टदलंपद्मंकृत्वा तत्रउद्बुध्यस्वेतिमंत्रेणस्वर्णनिर्मितबुधप्रतिमामध्येसंस्थाप्य तद्दक्षिणेविष्णुं इदंविष्णुरितिमंत्रेणवामेसहस्रशीर्षेतिनारायणं॰ दलेषुपूर्वादिक्रमेण रविं॰ सोमं॰ बुधं॰ गुरुं॰ शुक्रं॰ शनिं॰ राहुं॰ केतुं दलाग्रेषुपूर्वादिक्रमेण अनंतं॰ वामनं॰ सौरं॰ सत्यं॰ जनार्दनम्॰ हंसं॰ नारायणं॰ बाह्ये इंद्रादींश्चसंस्थाप्य दक्षिणे यमं॰ चित्रगुप्तं॰ श्यामलांचस्थापयेत् ततःमंडलात्परितः अष्टा

प क्षिणायुतानष्टकलशान् संस्थाप्यउक्तरीत्यापीनवस्त्रपुष्पादिभिःपूजयेत् पुष्पपूजांते अंगपूजां बुधायनमः पादौपू॰

पुत्राय॰ जानुनीपू॰ तारकाय॰ कटिं॰ राजपुत्राय॰ उदरं॰ इलाप्रियाय॰ हृदयं॰ कुमाराय॰ वक्षः पुरूरवसःपित्रे बाहू॰ सोमसुताय अंसौ॰ पीतवर्णाय॰ मुखंपू॰ ज्ञानायनमः नेत्रेपू॰ बुधाय॰ मूर्धानं॰ एवंसमाप्य तदुत्तरेउक्तरीत्याग्रहान्संस्थाप्यपूजयेत् केचित् पनंनेच्छंति तेषांमंडलांतः पातित्वात् ततःबुधायार्घ्यंसौवर्णादिपात्रेगंधपुष्पाक्षतयुतजलमादायजानुभ्यांअवनींगत्वा॰ उर्वश्याश्चगुरुर्यस्तुयः २
रवसःपिता योग्रहाणामधिपतिर्बुधोनःसंप्रसीदतु रात्रौकथाश्रवणादिनाजागरणंकृत्वा प्रातःपुनःसंपूज्य अग्निंप्रतिष्ठाप्य-

अन्वादध्यात् प्रधानं बुधं अपामार्गसमिद्यवव्रीहितिलमिश्रगोधूमद्रव्यैः पृथक्पृथक् अष्टोत्तरशतसंख्याकाहुतिभिरधिप्रत्यधिदेवताश्चैतैरेवद्र-
व्यैः पृथक् अष्टाविंशतिसंख्याकाहुतिभि. आवरणदेवताश्चैकैक याज्याहुत्यायक्ष्ये आदित्यादिग्रहान्नत्तद्रव्यैः अष्टाष्टसंख्ययायक्ष्ये मंडलदेवताश्च
एकैकयाज्याहुत्या एवंहोमंसंपाद्य स्विष्टकृदादिप्रायश्चित्तंकृत्वाबलिदानंपूर्णाहुतिंचसंपाद्य आचार्यादीन्संपूज्यदेवतोद्वासनांतंकृत्वा आचार्यादयः
यजमानमभिषिञ्च्य ततोयजमानः विभूतिधारणंकृत्वा आचार्यायाष्टलड्डुकवायनंदद्यात् संतुष्टोवायनादस्मादिलानाथोग्रहेश्वरः वरांश्चवि
ष्णुनादत्तान्सकलान्मे प्रयच्छतु सोपस्करंपीठंगांचदत्वा अन्येभ्यःपूर्वस्थापितकलशान्दत्वासदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत
अथशुक्लादिश्रावणकृष्णाष्टम्यादशाफलव्रतम् आदित्यपुराणे अष्टम्यांजन्मसमयेस्नात्वादेशकालसंकीर्तनांते ममदुःखशोकदारिद्र्यादि
नाशपूर्वकंसकलसुखसौभाग्यादिप्राप्तिद्वाराश्रीकृष्णप्रीत्यर्थंदशवर्षात्मकंदशाहंदशाफलव्रतंकरिष्ये इतिसंकल्प्यपीठादौश्रीकृष्णंसंपूज्यद
शतुलसीदलानिदशनामभिःकृष्णविष्णवनंतगोविंदगरुडध्वजदामोदरहृषीकेशपद्मनाभहरिप्रभुभ्यः समर्पयेत् पूजनमंत्रः नाराय-
णायदेवाय गोकुलागारवासिने दिव्यायदिव्यरूपायबालकृष्णायतेनमः नृहिण्योरितिवानदग्रेदशगुणंदशग्रंथियुतंसूत्रंन्यसेत् पुरतः
दशपद्मानिपिष्टेनकृत्वापूजयित्वातत्सूत्रंकंठेहस्तेवाधारयेत् मंत्रः संसारार्णवमग्नानांनराणांपापकर्मणाम् इहामुत्रफलावाप्तिंकुरुष्वपुरुषो
त्तम धृत्वादशाहंव्रतमाचरेत् दशमेन्हिपूजनंकृत्वा प्रस्थगोधूमचूर्णेनत्रिंशन्मोदकान्कृत्वादशदेवायदशब्राह्मणाय दशआत्मने मोदकान्द
शविधफलदक्षिणायुतदशमोदकवायनं त्रिलोकीनाथदेवेशसर्वभूतदयानिधे दानेनानेनदेवेशयथोक्तफलदोभवेतिद्त्वाप्रार्थयेत् देवदेवजगन्नाथवांछि

१ गृहम

तीर्थफलप्रद व्रतेनानेनसुप्रीतोरक्षत्वंभवसागरात् ततःभोजनंकुर्यात् एवंदशवर्षपर्यंतंदशफलनामानि नारीकेलंचदाडिंबंनारिंगंकदलीफलं-
पूगीफलंमातुलिंगंजंबीरंखर्जुरीफलम् कर्कोटकीबदामादिदशफलमितिस्मृतम् उद्यापनं पूर्वोक्तसंकल्पांतेवृताचार्यः सर्वतोभद्रस्थकल
शोपरिहेमीं श्रीकृष्णप्रतिमांसंस्थाप्य पूर्वोक्तप्रकारेणसुवर्णतुलसीदलेनच पूज्यरात्रौजागरणंकुर्यात् प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् प्रधानश्री
कृष्णं अश्वत्थसमिच्चरुघृतद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्ययामंडलदेवताश्च एकैकयाज्याहुत्यायक्ष्ये एवंहोमंसंपाद्य पूर्वोक्तप्रकारेणवायनंदत्वा
पस्करंपीठंगांचाचार्यदद्यात् अन्यान्ब्राह्मणांश्च संतर्प्यआशिषोगृहीत्वाभुंजीत अथश्रावणकृष्णाष्टम्यांनिशीथव्यापिन्यांजन्माष्टमीव्रतम्
प्रातः दंतधावनपूर्वकंस्नात्वादेशकालौसंकीर्त्य ममअखिलपापक्षयपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा अमुककामनयावाआ
चरितजन्माष्टमीव्रतोद्यापनंकरिष्ये तदंगंपुण्याहवाचनादिकृत्वा वृताचार्यःगोमयादिलिप्तशस्तदेशे पंचवर्णपुष्पमालाफलादिशोभितवेद्यां
सर्वतोभद्रेप्रस्थतिलोपरिस्थकलशोपरि पूर्णपात्रेरौप्यमयेपर्यंकेसौवर्णींदेवकीं तदुत्संगेवामनंस्तनपायिनंसौवर्णंश्रीकृष्णंइदंविष्णुरितिविष्णोर्नु
कमितिवामंत्रेणपरितः वसुदेवं॰ बलदेवं॰ नंदं॰ यशोदां॰ सुभद्रां॰रोहिणीं॰विधुं मत्स्यादिदशरूपाणि आदित्यादिग्रहान् अश्विन्यादिसप्तविंशति-
नक्षत्राणि देवान्॰ नागान्॰ यक्षान्॰ विद्याधरान्॰ उरगान्॰ यमुनां॰ कालियं॰कंसं॰ गाः॰योगनिद्रां॰ सात्यकिं॰उद्धवं॰ अक्रूरं॰उग्रसेनादियाद॰
शंखं॰ चक्रं॰ गदां॰ पद्मं॰त्रुटिं॰ कालात्मानं॰ अहोरात्रं॰ मासं॰संवत्सरं॰सर्वात्मानं॰द्वारपालान्॰पुण्यशीलं॰सुशीलं॰जयं॰विजयं॰ पुरतःगरुडं॰
एवंनाममंत्रैरावाह्यपुरुषसूक्तेनपूजयेत् ध्यानं कृष्णंचतुर्भुजंदेवंशंखचक्रगदाधरम् पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषितम् लसत्कौस्तुभशो

१ अर्धरात्र.

भाद्यं मेघश्यामं सुलोचनम् ध्यायामि पुंडरीकाक्षं जगदानंदकारकम् अंगपूजा कृष्णाय॰ पादौ पूजयामि संकर्षणाय॰ गुल्फौ॰ कालात्मने॰ जा
नुनी॰ विश्वकर्मणे॰ जंघे॰ विश्वनेत्राय॰ कटिं॰ पद्मनाभाय॰ नाभिं॰ परमात्मने॰ हृदयं॰ श्रीकंठाय॰ कंठं पू॰ सर्वास्त्रधारिणे॰ बाहुं॰ वाचस्प
तये॰ मुखं॰ केशवाय॰ ललाटं॰ सर्वात्मने शिरः॰ पूजां समाप्य स्तोत्रं पठेत् अनघं वामनं शौरिं वैकुंठं पुरुषोत्तमम् वासुदेवं हृषीकेशं माधवं मधु
सूदनं वराहं पुंडरीकाक्षं नृसिंहं दैत्यसूदनम् दामोदरं पद्मनाभं केशवं गरुडध्वजम् गोविंदमच्युतं विष्णुमनंतमपराजितम् अधोक्षजं जगद्बीजं
सृष्टिस्थित्यंतकारकं अनादिनिधनं कृष्णं त्रैलोक्येशं जगद्गुरुम् नारायणं चतुर्बाहुं शंखचक्रगदाधरं पीतांबरधरं नित्यं वनमालाविराजितं
श्रीवत्सांकं जगत्सेतुं श्रीधरं श्रीपतिं हरिम् इतिस्तोत्रं पठेत् देवस्य जातकर्म षष्ठीपूजादिकं कृत्वा पुरत: [1]अभया[2]वचा[3]शुंठी गुडूची पिप्पली श-
स्त्राणि निक्षिप्यार्घ्यं दद्यात् चंद्रोदये जातः कंसवधार्थाय भूभारोत्तारणाय च कौरवाणां विनाशाय दैत्यानां निधनाय च पांडवानां हितार्थाय धर्मसंस्था
पनाय च गृहाणार्घ्यं मया दत्तं देवकीसहितो हरे इति कृष्णायार्घ्यं॰ अंगणे भूमौ रजतं चंद्रबिंबं पूज्य तस्यार्घ्यं जानुभ्यामवनिं स्पृष्ट्वा क्षीरोदार्णव
संभूत लक्ष्मीबंधो निशाकर गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् रोहिण्या अर्घ्यं॰ दक्षस्य दुहिता साध्वी रोहिणी नाम नामतः सोमेन सहि
ते देवि गृहाणार्घ्यं नमोस्तु ते ततः प्रार्थना त्राहि मां सर्वग श्रीश हरे संसारसागरात् त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो यद्बाल्ये यच्च कौ
मारे यौवने यच्च वार्धके तत्पुण्यं वृद्धिमाप्नोति पापं हर हलायुधेति रात्रौ जागरणं कुर्यात् प्रातः स्नात्वा संपूज्य अग्निं प्रतिष्ठाप्य अन्वादध्या-
त् प्रधानं विष्णुं इदं विष्णुरिति मंत्रेण पायसतिलव्रीहि यवद्रव्यैः प्रतिद्रव्यं अष्टोत्तरशतसंख्याकाहुतिभिः पुनः पंचरवाद्येन विष्णोर्नु-

१ बेहेडा २ वेखंड ३ गुळवेल इति प्रसिद्धा.

कमितिमंत्रेणअष्टोत्तरशतसंख्यया पुनःपुरुषसूक्तेनप्रत्यृचं एकैकयाज्याहुत्यामहाव्याहृतिभिश्च अष्टाविंशतिसंख्याज्याहुतिभिः परिवारदेवताः
ब्रम्हादिदेवताश्च एकैकयाज्याहुत्याशेषेणस्विष्टकृतं तत आचार्यं संपूज्य विभवेसति भूशय्यारोप्यवस्त्रकांचनादिदत्वापीठंचदद्यात् श्रीकृष्णाः
प्रतिगृण्हातिश्रीकृष्णोवैददातिच श्रीकृष्णास्तारकोभाभ्यांश्रीकृष्णायनमोनमः कृष्णायानंतरूपायदास्यामिप्रतिमामिमां द्रव्यं विष्णुसमु
द्भूत मनःशांतिंप्रयच्छमे व्रतपूर्त्यैगांचदद्यात् अभिषेकः शतमर्धंविंशति दशवाब्राम्हणान् संतर्प्य स्वयंभुंजीतेतिभविष्योत्तरे अथज्येष्ठाव्रत-
भाद्रपदशुक्लाष्टम्यांज्येष्ठर्क्षे इदंचज्येष्ठायोगवशेन पूर्वविद्धायां परविद्धायांवा कार्यम् दिनद्वयेतद्योगेपरैव पूर्वेद्युरात्रौतद्योगेपूर्वैव अन्य-
। ।षः अष्टमीरविवारज्येष्ठर्क्षयोगेनीलज्येष्ठेत्युच्यते देशकालसंकीर्तनांतेमम अलक्ष्मीपरिहारपूर्वकं धन धान्य पुत्रपौत्र सौभाग्यादिवृ-
द्धिद्वाराश्रीज्येष्ठादेवताप्रीत्यर्थं अमुककामनासिद्ध्यर्थंवाज्येष्ठाव्रतंतदुद्यापनंच करिष्ये पूर्वेद्युःनद्याः शुद्धदेशजाः सिकताः समानीयतत्र देवीस्व
रूपं कृत्वापूजयेत् उद्यापनेतुसौवर्णींज्येष्ठाप्रतिमांमंडले कलशोपरि संस्थाप्य पूजयेत् त्रिलोचनां शुक्लदंतीं बिभ्रतींराजतींतनुं विरक्तांर-
क्तनयनांज्येष्ठामावाहयाम्यहम् इतिनाममंत्रेणपूजा ज्येष्ठेश्रेष्ठेतपोनिष्ठे ब्रह्मिष्ठेसत्यवादिनि एह्येहित्वंमहामाये गृहाणार्घ्यंनमोस्तुते इत्यर्घ्यं
तामग्निवर्णामापोहिष्ठेति तिसृभिः हिरण्यवर्णेतिचतसृभिरभिषेकः प्रार्थना यस्याः सिंहोरथेयुक्तोव्याघ्रश्चापिमहाबलः ज्येष्ठासंज्ञामिमांदेवीं
प्रपद्येशरणंशुभम् ततःतर्पणम् ज्येष्ठांतर्पयामि सत्यांत॰ कलिप्रियांत॰ विद्यां॰ विनायिकीं॰ तापिनीं॰ श्रीकृष्णांतर्प॰ अपूपवायनंदत्वारा-
त्रौजागरणंकृत्वा प्रातःपुनःसंपूज्य अग्निंप्रतिष्ठाप्य अत्रप्रधानं गौरींतामग्निवर्णामितिमंत्रेणदधिमधुक्षीरघृतैः प्रत्येकमष्टोत्तरश-

तत्संख्याकाहुतिभिः मंडलदेवताश्चैकैकयाज्याहुत्याशेषेणास्विष्ट० एवंहोमंकृत्वा पूजनंसंपाद्य आचार्याय कृष्णवस्त्रयुतंपीठंव्रतपूर्तये गांचदद्या-
त् सुवासिनीःवस्त्रालंकारादिभिःसंपूज्यब्राह्मणांश्चसंतर्प्य आशिषोगृहीत्वास्वयंभुंजीत सिकतादिकंनद्यांत्यजेत् एवंद्वादशवर्षपर्यंतमाजन्मपर्यंतंवा
भाद्रशुक्लाष्टम्यांदूर्वाष्टमीव्रतं भविष्ये प्रातःशुक्लतिलैःस्नात्वा देशकालौसंकीर्त्य ममइहजन्मनिजन्मांतरेच अखंडसौभाग्यपुत्रपौत्रादिलक्ष्मीप्राप्त्यर्थं
दूर्वाष्टमीव्रतंकरिष्ये उदीचींदिशंगत्वादूर्वामूलंनमस्कृत्यप्रार्थयेत् त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव यथाशाखा
प्रशाखाभिर्विस्तृतासिमहीतले तथाविस्तृतसंतानंदेहित्वमजरामरेइति तत्रैवगृहे वावितस्तिमात्रांदूर्वांआनीयपीठेसंस्थाप्य तत्रतन्मूलेशिवंगणेशंसंस्था
प्यतत्तन्मंत्रेणपूजयेत् आगच्छदेविदूर्वेत्वंसर्वसंपत्प्रदायिनी यावद्व्रतंसमाप्येततावत्त्वंसन्निधाभव इत्यावाहन गंधाक्षतैःस्रग्भिश्चपूजनं खर्जूरी-
नारिकेलमातुलिंगद्राक्षाबदरालिकुचजंबीरबीजपूरदाडिमीफलैर्नैवेद्यंतैरेववायनंविप्रायदत्वा पूर्ववत्संप्रार्थ्यदेवींविसर्जयेत् मंत्रः विष्णुदेहसमु-
द्भूते दूर्वेत्वंहिप्रसीदमे वंदितासर्वदेवैस्तु गम्यतांनिजमंदिरं ततःसदन्नेनब्राह्मणान्संतर्प्य स्वयंअग्निपक्वमन्नंदधिफलमक्षारलवणमश्नीयात्
एवंप्रतिमासमष्टम्यां एवंसंवत्सरंकृत्वाअंतेउद्यापनंकुर्यात् व्रताचार्योमंडलोपरि कलशस्थवैणवपात्रेसप्तधान्ययुक्तेहैमींरौप्यमूलयुतांदूर्वांसं-
स्थाप्य पूर्वोक्तप्रकारेणपूजयित्वा रात्रौजागरणंकुर्यात् प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् प्रधानंगौरींकांडात्कांडादितिमंत्रेणतिलैः आज्येन-
चअष्टाधिकशतसंख्ययायक्ष्ये मंडलदेवताः पूर्ववत् एवंहोमंसंपाद्यब्राह्मणेभ्यः तिलपिष्टगोधूमसप्तधान्यानिफलानिच वायनत्वेनदत्वाआ-
चार्यंवस्त्रादिभिःसंपूज्यतस्मैसोपस्करंपीठंव्रतपूर्तयेगांचदत्वा द्वादशब्राह्मणान्सदन्नेनसंतर्प्य आशिषोगृहीत्वा संतानवृद्धिर्भवति

१ पनसः

अथभाद्रपदशुक्लाष्टमीमारभ्यषोडशदिनपर्यंतंमहालक्ष्मीव्रतं तच्चार्धरात्रातिक्रमवर्तिन्यामष्टम्यांकार्यम् अत्रज्येष्ठायुतायांप्राशस्त्यं अष्टम्यांप्रा
तःषोडशवारंअंघ्रीकरौमुखंच प्रक्षाल्यषोडश गंडूषांश्चकृत्वामंत्रस्नानपुरःसरं स्नात्वातिथ्यादिसंकीर्त्य ममसकलदौर्भाग्यदुःखनिबर्हणपूर्व-
धनधान्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीमहालक्ष्मीप्रीत्यर्थंमहालक्ष्मीव्रतंकरिष्ये ततःषोडशतंतुमयंषोडशग्रंथियुतंसूत्रंनिर्मायविमला
नेसंस्थाप्य तत्र महालक्ष्मिसमागच्छ पद्मनाभपदादिह पंचोपचारपूजेयंत्वदर्थंपरिकल्पितेतिलक्ष्मी मावाह्य षोडशदूर्वांकुरैः मालतीपु-
ष्पैश्चंदनादिभिः श्रीसूक्तेनलक्ष्मीसूक्तेनवासंपूज्य प्रार्थयेत् धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियम् तुरगान्दंतिनःपुत्रान् महालक्ष्मि
प्रयच्छमे विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे लक्ष्मिदेवियथासित्वंगृहेसूत्रेतथावसेति अनेनपुरुषेणदक्षिणकरेस्त्रियाः कंठेबध्वा क
त्वा भुंजीत एवंकृष्णाष्टमीपर्यंतं प्रत्यहंतदेवसूत्रंसंपूज्यधारयेत् कृष्णाष्टम्यांप्रातःवस्त्रंगृहंरंगवल्यादिभिर्युतंकृत्वा तत्रअष्टदलंइंद्रादिश-
श्रुतंनिर्मायतत्रकाष्ठमृच्चंदनादिभिः चतुर्भुजांगजपृष्ठगतांमहालक्ष्मीमूर्तिंविरच्यतत्रपूर्ववन्नूतनंसूत्रंप्रतिष्ठाप्यपूजयेत् अथांगपूजा चपला
० पादौपू० चंचलायै० जानुनी० कमलवासिन्यै० कटिं० शांत्यै० नाभिं० मन्मथवासिन्यै० स्तनौ० ललितायै० भुजद्वयं० लक्ष्म्यै० कंठं० मायायै०
० श्रियै० शिरःपू० समायै० सर्वांगं पूर्ववत्पूज्यप्रार्थ्य तन्नूतनसूत्रंपूर्ववत्कृत्वा षोडशनमस्कारान्कृत्वाजीर्णदोरकं० महालक्ष्मिगृहाणत्वंदोरकंप-
मयाधृतं उत्तीर्यदोरकंबाह्वोर्लक्ष्मीपार्श्वेनिवेदयेत् ततःब्राह्मणान्संपूज्य शूर्पेषोडशदीपान्षोडशगोधूमलड्डुकांश्चनिधायदद्यात् चतुर्दशसं-
कान्दीपान्पिंडान्घृतपूलान् गृहाणत्वंद्विजश्रेष्ठवायनंप्रीतयेश्रियः ततःचंद्रोदयेसतिचंद्रंसंपूज्य अर्घ्यंदद्यात् नमस्तेस्तुनिशानाथ लक्ष्मी-

ध्यातर्नमोस्तुते व्रतंसंपूर्णतांयातु गृहाणार्घ्यंविधोमम ततःभोजनंकृत्वा रात्रौजागरणंकुर्यात् प्रातःविसर्जयेत् अनेनमंत्रेणपंकजंदेवि-
संत्यज्य ममवेश्मनिसंविशे यथासपुत्रभृत्याहं स्फुरवीम्यांत्वत्प्रसादतः तत्सूत्रंवर्षपर्यंतंधारयेत् एवंषोडशवर्षपर्यंतं अशक्तौषोडशदिनंवाच
रित्वांतेउद्यापनंकुर्यात् पूर्वोक्तसंकल्पांतेवृताचार्यः सर्वतोभद्रस्थकलशेहैमीं महालक्ष्मीप्रतिमांसक्तुमिवेतिमंत्रेणसंस्थाप्य पूर्ववत्पूजयेत् चंद्रायार्घ्यं
दत्वादेवींप्रार्थयेत् क्षीरोदार्णवसंभूते कमलेकमलालये प्रयच्छसर्वकामान्मे विष्णुवक्षस्थलालये पुत्रान्देहि धनंदेहि सौख्यंसौभाग्यमेवच कु-
रुष्वित्वंमहालक्ष्मीमलक्ष्मीमाशुनाशय रात्रौजागरणंकुर्यात् प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् प्रधानं महालक्ष्मींश्रीसूक्तेनप्रत्यृचंकमलैः पुनःघृ
ताक्तपायसबिल्वघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः लक्ष्मीमंत्रेणयक्ष्ये मंडलदेवताश्चाज्येन एवंहोमंकृत्वा आचार्यंसंपूज्य पीठंगां-
चदत्वा ततःषोडशमिथुनानिवस्त्रादिभिः पूजयित्वाशूर्पेषोडशनानाविधभक्ष्याणि चंदनताडपत्रपूगीफलयुतानिचनिक्षिप्यान्येशूर्पेणा-
च्छादयेत् क्षीरोदार्णवसंभूता लक्ष्मीश्चंद्रसहोदरा व्रतेनानेनसंतुष्टा प्रीयतांविष्णुवल्लभा एवंषोडश ततःब्राह्मणान्संतर्प्य आशिषोगृही
त्वाभुंजीत इतिश्रीमच्छंकरविरचितायांव्रतोद्यापनकौमुद्यांअष्टमीव्रतानि अथनवमीव्रतानि तत्रचैत्रशुक्लनवम्यांरामनवमीव्रतंस्कांदे
तच्चपरविद्धागांमध्याह्नव्यापिन्यांकार्यं तिथ्यादिसंकीर्त्य० आत्मनः अखिलपापक्षयपूर्वकं चतुर्विधपुरुषार्थसिद्धिद्वारा ममआचरितस्य राम
नवमीव्रतस्य सांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ततःपूर्ववत् वृताचार्यः सर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रे षट्कोणपद्मंविलिख्य तत्रमध्ये
हैमंरामंषडक्षरेणत्रयोदशाक्षरेणवामूलमंत्रेणावाह्य मूलमंत्रस्तु श्रीरामरामरामेतिषडक्षरमंत्रः श्रीरामजयरामजयजयरामेति त्रयोदशाक्षर

वैदिकस्तु भद्रोभद्रयासचमानआगादिति तद्वामंत्रः हैमींसीतांजनकात्मजायैनमइतिनाममंत्रेणत्वप्रतिष्ठाप्यपरितःषट्कोणेषु क्रमेण दशर 
थं कौसल्यां लक्ष्मणं भरतं शत्रुघ्नं मारुतिंचनाममंत्रैःप्रतिष्ठाप्य पुरुषसूक्तेनपूजयेत् पुष्पोत्तरं अंगपूजा श्रीरामचंद्रायनमः पादौपूजयामि
एवंसर्वत्र राजीवलोचनाय० गुल्फौपू० रावणांतकाय० जानुनीपू० विश्वामित्रप्रियाय० नाभिंपू० परमात्मने० हृदयं० श्रीकंठाय० कंठं०
सर्वास्त्रधारिणे० बाहू० विश्वमूर्तये० मुखं० पद्मनाभाय० जिह्वां० दामोदराय० दंतान्० सीतापतये० ललाटं० ज्ञानगम्याय० शिरः० सर्वात्मने०
सर्वांगं० नमस्कारमंत्रः नमोदेवाधिदेवाय रघुनाथाय शार्ङ्गिणे चिन्मयानंदरूपायसीतायाःपतयेनमइति अर्घ्यमंत्रः दशाननवधार्थायधर्म
स्थापनायच राक्षसानांविनाशायदैत्यानांनिधनायच परित्राणायसाधूनांजातोरामस्स्वयंहरिः गृहाणार्घ्यंमयादत्तंभ्रात्रादिसहितोनघइति ततः
पठनादिनारात्रिंनिनयेत् प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् अत्रप्रधानं रामंआज्यपायसद्रव्येणप्रत्येकंअष्टोत्तरशतसंख्याकाहुतिभिःमूलमंत्रेण
अग्न्यादिसमदेवताःउक्तद्रव्येणअष्टाविंशतिसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये एवंहोमंसंपाद्य आचार्यंसंपूज्यप्रतिमांदद्यात्
तत्रमंत्रः इमांस्वर्णमयींरामप्रतिमांसमलंकृतां श्रीरामप्रीतयेदास्येप्रीतोभवतुराघवइति ततःव्रतपूर्तयेगांचदत्वासदन्नेनब्राह्मणान्संतर्प्यद-
क्षिणादिभिः प्रतोष्यआशिषोगृहीत्वास्वयंभुंजीत इतिरामनवमीव्रतं अथरामनामलेखनोद्यापनविधिः भविष्ये उमांप्रतिमहादेववचनम् रा
मनामलिखेद्यस्तुलक्षकोटिशतावधि एकैकमक्षरंपुंसांमहापातकनाशनं प्राप्नोतिपरमांसिद्धिंदीर्घायुःप्रतिसंपदमिति तिथ्यादिसंकीर्त्य आ- २०
त्मनः अनेकपातकक्षयपूर्वकसकलमनोरथावाप्तिद्वाराश्रीरामचंद्रप्रीत्यर्थंमयालिखितंयत्कोटिलक्षामुकावधि रामनामतत्संपूर्णतासिद्ध्यर्थं-

ह्येतदुद्यापनाख्यंकर्मक० इतिसंकल्प्य पूर्ववद्वृताचार्यः सर्वतोभद्रस्थकलशे साक्षतपूर्णपात्रे षोडशमाषात्मकराजतसिंहासने स्वर्णस्य
पलेनतदर्धेनवानिर्मितंरामंवामतः सीतांदक्षिणतोलक्ष्मणंपुरतो हनूमंतञ्च सौवर्णप्रतिमासु मूलमन्त्रेणाऽऽवाह्य पुरुषसूक्तेनच पूजयेत् परितः
सप्तधान्योपरिवारिपूर्णानष्टौ कलशान् पूर्वादिक्रमेण संस्थाप्य तेषु लोकेशास्तत्तन्मन्त्रैरावाह्य पूजयेत् प्रातः अग्निंप्रतिष्ठाप्यान्वादध्यात् अत्र ले-
खनदशांशेनशतांशेनवाहोमः अत्रप्रधानम् रामंआज्यद्रव्येणलेखनदशांशेन शतांशेनवा मूलमंत्रेण परिवारदेवताः ब्रह्मादिदेवताश्च एकैक
याज्याहुत्यायक्ष्ये एवंहोमंसंपाद्य आचार्यसंपूज्य पीठंदद्यात् तत्रमंत्रः सीतासौमित्रिहनुमद्युतरामंसुदक्षिणं ददामि द्विजवर्याय रामोमे प्रीयता
मिति ततः व्रतसंपूर्तये गांचदत्वा घृतपूरितकांस्यपात्रं तिलपात्रंच यथाशक्ति दशदानानि दत्वा योगिराजं बटुकत्रयंच अन्यानपि सद्विजान् सदन्ने
नसंतर्प्य दक्षिणादिना प्रतोष्य आशिषो गृहीत्वा इष्टजनैः सह भुंजीत अथ भाद्रपद शुक्लनवम्यां मुहूर्तमात्रसत्वेपि परयुतायां अदुःखनवमीव्रतंस्कां
दे तिथ्यादिसंकीर्त्य आत्मनः सकलदुःखनाशपूर्वकं अभीष्टसिद्धिद्वारा श्रीगौरीप्रीत्यर्थं अदुःखनवमीव्रतंकरिष्ये इतिसंकल्प्य गोमयेनोप
लिप्य भूमौवेदीं गुडेनलिप्तां इक्षुच्छादितां अपूपपायसादियुतां उपरिमंडपिकायुतां कृत्वा तत्रपीठे गौरींगौरीर्मिमायेति नमोदेव्या इतिवामंत्रेण संपू
ज्य रात्रिंजागरणादिनानयेत् तद्दिने हिंसादिरहितंउपोषणंकार्यम् अशक्तश्चेद्दुग्धफलादि भक्ष्यं अत्यंताशक्तश्चेद्धविष्यान्नं प्रातः देवींसंपूज्य
सपत्नीकं ब्राह्मणं संपूज्य पंचफलान्वितं वायनं सोपस्करं दद्यात् तत्रमन्त्रः गौर्यदुःखविनाशिन्या व्रतसंपूर्तिहेतवे वायनं द्विजवर्याय सहिरण्यं ददाम्य
हम् इतिदत्वा देवीं विसर्ज्य पीठं दत्वा त्रिभ्योधिकान् द्विजान् संतर्प्य भुंजीत अथदशमीव्रतानि तत्र शुभमासस्य यस्यांकस्यांचिच्छुक्लद-

१ सन्यासिनम्. २ नामनत्रयम्.

शम्यां आशादशमीव्रतम् हेमाद्रौ भविष्योत्तरे तिथ्यादि संकीर्त्य आत्मनः अखिल मनोरथावाप्ति पूर्वकं दशाशारूपी परमेश्वर प्रीत्यर्थं आशाद-
शमीव्रतं करिष्ये इति संकल्प्य नक्तं गोमयेनोपलिप्त गृहांगणे यवैः पिष्टातकेन वा स्त्रीरूपाः दशाशास्वरूपाः पुत्तलिका विलिख्य तत्र इंद्रादीन् आ-
युधवाहनादियुतान् तत्तन्मंत्रैः नाममंत्रैर्वा संपूज्य घृताक्तं नैवेद्यं भक्ष्य भोज्यादियुतं दीपांश्च पृथक् पृथक् दापयित्वा कालोद्भवानि फलानि च समर्प्य
प्रार्थयेत् आशास्त्वाशाः सदासंतु सिद्ध्यंतां मे मनोरथाः भवतीनां प्रसादेन सदा कल्याणमास्थिताः ततः विप्रं संपूज्य दक्षिणां दत्वा ब्राम्हणभोजन पु-
रःसरं स्वयं भुंजीत अनेन क्रमयोगेन मासि मासि समाचरेत् वर्षांते च कुरुश्रेष्ठ उद्यापनविधिं चरेत् उद्यापनं करिष्य इति संकल्प्य वृताचा-
र्यः सर्वतोभद्रे ब्रम्हादि देवता आवाह्य तत्र अक्षतपुंजे षु सौवर्णाः रौप्या वा दशाशा प्रतिमाः संस्थाप्य वक्ष्यमाण दशभिर्मंत्रैः संपूजयेत्
त्वयि सन्निहितः शक्रः सुरासुर नमस्कृतः पूज्यासि भुवनस्यास्य ऐंद्री दिग्देवते नमः अग्नेः परिग्रहाद्वासि त्वमाग्नेयीति पठ्यते तेजोरूपापरा
शक्तिराग्नेयी वरदा भव धर्मराजं समाश्रित्य लोकान्संयमनीत्यसौ तेन संयमिनी चासि वरदात्वं सदा भवेति खड्गहस्तासि विकृता निर्ऋति-
स्थानमाश्रिता तेन निर्ऋति नामासि त्वमाशां पूरयस्व मे त्वय्यास्ते भुवनाधारो वरुणो यादसांपतिः कर्मार्थे मम धर्मार्थे वारुणी मम वा भव अ-
धिष्ठितासि यस्मात्त्वं वायुना जगदायुना वायव्ये त्वमतः शांतिं नित्यं यच्छ मम आलये धनदेनाधिष्ठितासि प्रख्याता त्वमिहोत्तरा निरुत्तरा भवास्मा-
त् दत्वा सद्यो मनोरथान् देवेन जगदीशेन शंभुना त्वमलंकृता पूरयस्व शुभे देवि वांछितानि नमो नमः भुजंगाष्टकुलेन त्वं सेवितासि यतो
ह्यधः नागांगनाभिः सहसा हिता भव ममाधवे सर्वलोकोपरिगता सर्वदा त्वं शिवस्य च सनकाद्यैः परिवृता द्यौस्त्वं मां पाहि सर्वदा नक्षत्रा

१ दिशा २ बुकाइतिख्यातश्चूर्णविशेषः

णिचसर्वाणि ग्रहास्तारागणास्तथा नक्षत्रमातरोयाश्च भूतप्रेतविनायकाः सर्वेममेष्टसिद्ध्यर्थं भवंतु प्रवणाः सदा एभिर्मंत्रैः संपूज्य
तथागीतवादित्रमंगलैः पतिपुत्रवतीभिः स्त्रीभिः जागृद्भिः सहपुराणपठनादिनाच निशांनिनयेत् प्रातः स्नात्वा पूर्ववत्संपूज्य दशमिथुना
निवस्त्रादिना संपूज्य अभावे एकंवा संपूज्यतेभ्यः सौभाग्यद्रव्ययुतं वायनं दक्षिणायुतंदत्वा आचार्यायपीठं व्रतपूर्तयेगां चदत्वा भक्ष्यभोज्यादि-
नाब्राम्हणान्संतर्प्य दक्षिणादिनाप्रतोष्य सुहृन्मित्रादियुतो भुंजीत यएवंकुरुतेपार्थ दशमीव्रतमादरात् सर्वान्कामानवाप्नोति मनसोभीप्सि-
तान्नरः इतिआशादशमीव्रतम् अथभाद्रपदशुक्लदशम्यां दशावतारव्रतं भविष्ये तच्चदशवर्षात्मकं दशम्यांप्रातः नद्यादौ
स्नात्वानित्यकर्मनिर्वर्त्य गृहमागत्यसंकल्पंकुर्यात् तिथ्यादिसंकीर्त्य दशावरान् दशपरान् पुरुषानात्मानं चोद्धर्तुकामस्तथा श्वेतद्वीप
वासपूर्वकं निरतिशयानंदसुखावाप्तयेच दशा ॐ तारस्वरूपी परमेश्वरप्रीत्यर्थं दशावतारव्रतं करिष्ये इतिसंकल्प्य उक्तविधिना पुण्याहवाचना
दिकृत्वा नदीतीरे गृहेवा गोमयेनोपलिप्तशुद्ध भूमौ चंदनादिना मत्स्यादिदशावतारप्रतिमाः विलिख्य विष्णुमंत्रेण प्रतिष्ठाप्य पुरुषसूक्तेन-
षोडशोपचारैः पूजयेत् नैवेद्यादौविशेषः गोधूमादिधान्यचूर्णस्य स्वहस्तस्य प्रसृतित्रयं गृहीत्वा तस्यत्रिंशत्पदार्था घृतपाचिताः वक्ष्यमाण
संज्ञिताः कर्तव्याः तत्रदशदेवाय दशब्राम्हणाय दशआत्मने वर्षेवर्षे भिन्ननामकाः प्रथमे पूरिका द्वितीये अपूपाः तृतीये अपूपकासाराः
चतुर्थेमोदकाः पंचमेसोहालिकाः षष्ठेखंडवेष्टकाः सप्तमेकोकरसाः अष्टमेकर्पुष्पनिभाः नवमेकर्णवेष्टकाः दशमेमंडकाः एवंसंपूज्यनम-
स्कुर्यात् मत्स्यंकूर्मंवराहंच नरसिंहं त्रिविक्रमम् रामंरामंचकृष्णंच बौद्धंचैवसकल्किनं गतोस्मिशरणंदेवं हरिंनारायणंप्रभुं प्रणतोस्मिज

गन्धार्थंसमेविष्णुःप्रसीदतु छिनत्तुवैष्णवींमायांभक्त्याप्रीतोजनार्दनः श्वेतद्वीपंनयेत्तस्मान्मयात्मासन्निवेदितः ततोब्राम्हणंसंपूज्यदक्षिणांस-
कंदत्वानावन्मितंस्वयंमौनीभुंजीत एवंदशवर्षंप्रतिभाद्रपदशुक्लदशम्यांकृत्वाअंतेउद्यापनंकुर्यात् तद्यथा पूर्वसंकल्पंउ-
क्त्वाचरितस्यदशावतारव्रतस्यउद्यापनंकरिष्येइतिसंकल्प्य शुचीन्मंत्रविदः दशद्विजान्वृत्वाअभावेएकंवृत्वामधुपर्कादिना संपूज्यततः
: सर्वतोभद्रेउक्तविधिनाब्रम्हादिदेवतास्थापनपूर्वकंकलशप्रतिष्ठांतंकृत्वा तत्रहैमीर्दशप्रतिमाः मत्स्यादिदशावतारस्वरूपाः विष्णु-
नषोडशोपचारैः पुराणस्तोत्रैः स्तुत्वाप्रणमेयुः ततोयजमानः पूर्वनिमंत्रितान् वस्त्रा
दिनासंपूज्यक्रमेणताः प्रतिमास्तेभ्योदाद्य : ब्राह्मणान्संतर्प्य आशिषोगृहीत्वास्वयंभुंजीत आश्विनशुक्लद-
शमीविजयादशमी सान्ध्यतारकोदयव्यापिनीग्राह्या तत्रकृत्यंभविष्ये गोपथब्राह्मणेचमंगलवाद्यघोषपुरःसरंसर्वेजनाःभूष
: सीमांतंगत्वा तत्रगणेशंदिक्पालांश्चसंपूज्यशमींसंपूजयेत् तत्रमंत्रः शमीशमयतेपापंशमीलोहितकंटकी
अमंगलानांशमनीशमनीदुष्कृतस्यच दुःस्वप्ननाशिनीधन्याशमीतांप्रणमाम्यहम् करिष्यमाणयात्रायांयथाकालंसुखंमम तत्र-
नवश्रीरामपूजिते क्षत्रियादिस्तुआत्मनिवारामसाम्यतांध्यात्वारिपुमतिकृतिंकृत्वातांचशरेणछित्वा ब्राम्हणेभ्यो-
दानादिदत्वाशमीमूलगतांआर्द्रांमृदंगृहीत्वाजयमंगलशब्देनवारस्त्रीभिर्नीराज्यमानोरथवाजिगजपदातीनांप्रेक्षाकौतुकमाचर-
न्सोत्साहःस्वगृहंविशेत् अथदशादित्यव्रतंपाद्मे यदायस्मिन्कस्मिन्मासेशुक्लपक्षेरविवासरेदशमीतदाकर्तव्यं तत्रविधिः ३२

प्रातः नद्यादौ स्नात्वा गृहमागत्य संकल्पं कुर्यात् तद्यथा तिथ्यादिसंकीर्त्य मम समस्तपापक्षयपूर्वक पुत्रपौत्रसमुन्नति धनधान्य गुणोत्कर्षप्राप्त्यर्थं त-
था इह जन्मनि जन्मांतरे वा ज्ञानतो वाज्ञानतः तुषास्थिभस्ममुसलसंमार्जनीलंघनकुमारीरजकीरजस्वलावियोनिपशुयोनिब्राह्मणीगुरुयोषिद्गर्भि-
णीगमनसंध्याकालपर्वकालपुण्यसमयस्त्रीगमनपुत्रमातृत्यागस्वामिधर्मपत्नीत्यागादि दुष्टकर्मजनितदुर्दशानिरसनार्थं शुभदशाप्राप्त्यर्थं दशा-
दित्यव्रतं करिष्ये इति संकल्प्य गणेशपूजनं पुण्याहवाचनंच कृत्वा पीठे नित्यवत् सूर्यं आकृष्णेनेति मंत्रेणावाह्य ध्येयः सदा सवितृ-
मंडलेति त्रिमूर्तिरूपिणं ध्यात्वा पुरुषसूक्तेन षोडशोपचारैः पूजयेत् ततः दुर्दशादेवतापूजनं शुद्धभूमौ कृष्णवर्णचूर्णेन मनुष्याकृतिर्वा दश पुत्त-
लिकाः विलिख्य वक्ष्यमाणदशनामभिः क्रमेण आवाह्य तत्तन्नाममंत्रेण षोडशोपचारैः पूजयेत् दुर्दशानामानि दुर्मुखायै० दुर्मुखा० इ-
ति सर्वत्र दीनवदनायै० मालिन्यै० सत्यनाशिन्यै० सुबुद्धिनाशिन्यै० हिंस्रायै० दुष्टायै० मित्रविरोधिन्यै० उच्चाटनकारिण्यै० बहुचिंताप्रदा-
यै० दुर्दशायै० एवं संपूज्य अनेन मंत्रेण विसर्जयेत् नित्यं पापकरे पापे देवद्विजविरोधिनि गच्छ त्वं दुर्दशे देवि नीतिशास्त्रविरोधिनि ततः तत्पू-
जा भूमिं गोमयेनोपलेपयेत् स्वयं हस्तपादौ प्रक्षाल्य आचम्य प्राणानायम्य तिथ्यादिसंकीर्त्य दशादित्यव्रतांगभूतं दशादित्यदोरकपूजनं करि-
ष्ये इति संकल्प्य शुचौ देशे पंचरंगशोभितं अष्टदलं विरच्य तन्मध्ये तंडुलराशिं कृत्वा तदुपरि उक्तविधिना पूर्णपात्रयुतं तैजसकलशं प्रतिष्ठाप्य तत्र कुं-
कुमाष्टदलयुतं वस्त्रं प्रसार्य तत्र दशतंतुमितं दशग्रंथियुतं दोरकं संस्थाप्य दशग्रंथिषु वक्ष्यमाणदशनामभिः देवतावाहनं क्रमेण कुर्यात् सूर्याय०
सूर्यं० एवं सर्वत्र धात्रे० विधात्रे० अर्यम्णे० दिवाकराय० भास्कराय० भानवे० सुवर्णरेतसे० तपनाय० हंसतुरगाय० सवित्रे० आदित्या-

१ चित्रप्रतिमा

पू० एतैरेवमंत्रैः षोडशोपचारैः पूजयेत् ततः पूजितं दोरकं पुरुषस्य दक्षिणे करे स्त्रियाः वामे बध्वा दशसु दशाः पूजयेत् तत्र चंदनादिनाभि तो पटे वा दश पुत्तलिका विलिख्य वक्ष्यमाण दशनाममंत्रेण आवाहयेत् सुबुद्धिदायिन्यै० सुखकारिण्यै० सर्वसंपत्तिदायिन्यै० इष्टभोगदायिन्यै० लक्ष्मीदायिन्यै० कीर्तिदायिन्यै० दुःखनाशिन्यै० पुत्रदायिन्यै० विजयायै० धर्मदायिन्यै० इत्यावाह्य प्राणप्रतिष्ठां कृत्वा ततः विशुद्धदर्शनां दे ध्यायेद्दशदशां देवीं सर्वाभरणभूषितां इति ध्यात्वा एतैर्नाममंत्रैः षोडशोपचारैः पूजयेत् ततः प्रार्थयेत् विशुद्धवसने देवि इष्टभोगप्रदानाय समर्थं फलमाप्नुयात् ततः वायनं दद्यात् तद्यथा दशफलान्वितं दशमोदकान्वितं वायनं शूर्पे निधाय ब्राम्हणपूजनपूर्वकं दद्यात् तत्र मंत्रः भास्करो बुद्धिदो दाता द्रव्यस्थो भास्करः स्वयम् भास्करस्तारको स्माकं भास्कराय नमो नमः तत्र अन्यानपि ब्राम्हणान् भक्त्या वस्त्रादिना संपूज्य व्रतपूर्तये श्रोत्रियाय कुटुंबिने ब्राम्हणाय गां च दत्वा सदन्नेन विप्रान् संतर्प्य आशिषो गृहीत्वा देवं क्षमापयेत् मंत्रहीनं क्रियाहीनं भक्तिहीनं च यन्मया पूजितो सि सुरेशान परिपूर्णं तदस्तु मे ततः दुर्दशानाशनं विश्वरूपिणं भास्करं ध्यात्वा दोरकादि विसृज्य तैलादिवर्जितं दशमोदकान्वितं मौनेन भोजनं कुर्यात् इति दशादित्यव्रतं अथ दशहराव्रतं स्कांदे ज्येष्ठमासे सि-

तम्या बुधहस्तयोः गरानंदे व्यतीपाते कन्याचंद्रे वृषे रवौ दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते इति वराहपुराणे दशम्यां शुक्ल पक्षे तु ज्येष्ठे मासे च जान्हवी अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा हरते दशपापानि तस्माद्दशहरा स्मृता स्नानदानादिकं तस्या मनंतफलदायकमिति इति श्रीमच्चित्तपावनकुलाब्धिसंभव धारेत्युपनामक बल्लाळसूरिसूनु विरचितायां व्रतोद्यापनकौमुद्यां दशमीव्र-

नानि समासानि एकादशीव्रतोद्यापनविधिः ग्रंथारंभेउक्तः विशेषस्त्वत्रोच्यते अथज्येष्ठशुक्लैकादश्यांनिर्जलैकादशीव्रतं तद्विधिः
स्कांदे. ज्येष्ठमासिनृपश्रेष्ठ याशुक्लैकादशीभवेत् निर्जलंसमुपोष्यात्रजलकुंभान्सशर्करान् प्रदायविप्रमुख्येभ्यो मोदतेविष्णुसन्निधा-
विति तथाभारते भीमसेनंप्रतिव्यासवचनं वृषस्थेमिथुनस्थेवा शुक्लाह्येकादशीभवेत् ज्येष्ठमासेप्रयत्नेन उपोष्याजलवर्जिता उदयादु-
दयंयावद्वर्जयित्वाजलंनरः अप्रयत्नादवाप्नोति द्वादशद्वादशीर्नृप ततःप्रभातेविमले द्वादश्यांस्नानमाचरेत् जलंसुवर्णंदत्वाच द्विजातिभ्योयथाविधि
भुंजीतकृतकृत्यस्तु ब्राम्हणैःसहितोवशी संवत्सरस्ययामध्ये एकादश्योभवंत्युत तासांफलमवाप्नोति नात्रकार्याविचारणेति इतिनिर्जलैका-
दशीव्रतम् आषाढशुक्लैकादश्याशयन्येकादशीव्रतंब्रम्हपुराणे एकादश्यांतुशुक्लायामाषाढेभगवान्हरिः भुजंगशयनेशेतेयदाक्षीरा-
र्णवेसदा तदातत्प्रतिमाकार्यासर्वलक्षणसंयुता कांचनीराजतीताम्रीचारुपेत्तलकीतथा पीतांबरधरासौम्यापर्यंकेस्वास्तृतेशुभे स्नापयित्वा
दधिक्षीरघृतक्षौद्रजलैस्तथा उपचारैःषोडशकैःपूजयेत्परमेश्वरम् तत्रमंत्रः सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदं विबुद्धेत्वयिबुध्येत
जगत्सर्वंचराचरमिति रात्रौजागरणंकृत्वा प्रभातेदेवंसंपूज्यब्राम्हणान् सदन्नेनसंतर्प्य किंचिन्नियमान्वितोमौनीभुंजीत एवमेवप्रबोधि-
न्यांकार्यम् इतिआषाढशुक्लैकादश्यांशयन्येकादशीव्रतम् अथगोपद्मव्रतम् कार्तिकशुक्लैकादश्यांद्वादश्यांवाकार्यम् भविष्येति
थ्यादिसंकीर्त्य आत्मनोयमदंडनिरसनपूर्वकं पुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वाराश्रीगोपालप्रीत्यर्थंपंचवर्षाचरितगोपद्मव्रतोद्यापनंकरि-
ष्ये वृताचार्यः सर्वतोभद्रस्थकलशेहेमंचतुर्भुजंगोपालंसंपूज्य इदंविष्णुरितिमंत्रेणप्रार्थयेत् नमस्तेदेवदेवेशनमस्तेगरुडध्वज नमस्तेवि-

ष्णवे तुभ्यं व्रतस्य फलदायक प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात् गोपालं समित्तिलपायसाज्ययवद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः
ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये ततः क्रमेण द्रव्याणां होमे मंत्राः त्रीणिपदा० अतो देवा० इदं विष्णु० विष्णोर्नुकं० तत्सवितुर्वरेण्यं०
ततो वायनं प्रतिवर्षं क्रमेण सहैव वा त्रयस्त्रिंशत्संख्याकं दद्यात् प्रथमे पायसं द्वितीये मंडकान् तृतीये माषवटकान् चतुर्थे अपूपान् पंचमे
लड्डुकान् वायनमंत्रः वायनं ते द्विजश्रेष्ठ ददामि व्रतपूर्तये दक्षिणादिसुसंयुक्तं गोपालः प्रीयतामिति ततः पंचमिथुनानि वस्त्रादिना संपू-
ज्य आचार्याय गां च दत्वा एवमेव लक्षगोपद्मव्रतम् हवने विशेषः तद्दशांशेन शतांशेन वा पूर्वोक्तपंचद्रव्यैर्मिलित्वा कार्यम् वायनं च अ-
न्यत्समानं इति गोपद्मव्रतम् अथ भीष्मपंचकव्रतम् कार्तिकशुक्लैकादश्यां पंचदिनात्मकं पाद्मे तिथ्यादि संकीर्त्य आत्मनोऽखिल
पापक्षयपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं भीष्मपंचकव्रतं करिष्ये इति संकल्प्य पश्चिमां संध्यामुपास्य
नदीतीरे वा गृहे वा चतुर्द्वारोपशोभितमंडपे गोमयोपलिप्तवेदिकायां सर्वतोभद्रस्थतिलोपरि पूर्णपात्रयुतकलशे वासुदेवं ॐ नमो भगवते वासुदेवाये-
तिमंत्रेण संपूज्य अहोरात्रं दीपं पंचदिनं दत्वा मौनी अष्टशतं द्वादशाक्षरमंत्रं जप्त्वाऽग्निं प्रतिष्ठाप्य ॐ विष्णवे नमः स्वाहेति मंत्रेणाष्टोत्तरशतं
घृताक्ततिलव्रीहीन् हुत्वा स्वयं अंगुष्ठमात्रं गोमयं प्राश्य स्तोत्रपाठादिना रात्रिं निनयेत् दिनपंचके होमादिकं समानं विशेषः प्रथमेऽन्हि हरेः पा-
दौ कमलैः पूजयेत् स्वयं गोमयभक्षणं द्वितीयेऽन्हि बिल्वपत्रैर्जानुदेशं हरेः पूजयेत् त्रिपलं गोमूत्रं स्वयं प्राश्य तृतीयेऽन्हि नाभिं भृंगारकेन पूजये-
त् पलत्रयं पयः प्राशनम् चतुर्थेऽन्हि बालबिल्वांकुरैः स्कंधौ पूजयेत् पलत्रयं दधि प्राश्य पूर्णिमायां मालत्या हरेः शिरः संपूज्य पलमात्रंस

द्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताभ्यो एकैक याज्याहुत्या यष्टव्ये श्वेतायाएकवर्णायावागो. अंतरिक्षघृतंगोमयंप्राश्यं अं-
गुष्ठार्धमाहुतिप्रमाणं हवनमंत्राः सहस्रशीर्षेतिगोमयंव्याहृतिभिस्तिलान् होमांते वैष्णवंश्राद्धं कृत्वापीठंगांचदत्वाब्राह्मणान्भोजयेदिति अथवारा
त्रौहोमादिकं कृत्वा प्रातःस्वयं पारणं कुर्यात् इति सुरूपद्वादशीव्रतम् अथविष्णुपंचकव्रतं विष्णुधर्मोत्तरे तत्रग्रहणविधिः अथभाद्रपदशुक्ल-
द्वादश्यां यदाश्रवणर्क्षं तदारभ्यवर्षपर्यंतं कार्यम् मासेपंचोपोषणानि श्रवणेएकादशीद्वये अमायांपूर्णिमायां विष्णुंसंपूज्यउपवसेत् एवंसंवत्स
रंकुर्यात् अंतेद्वादश्यामुद्यापनंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्य आत्मनः पंचमहापातक सकलपातकोपपातकक्षयपूर्वकं विष्णुलोकप्राप्तिद्वा-
राश्रीविष्णुप्रीत्यर्थं आचरितस्यवर्षपर्यंतं विष्णुपंचकव्रतस्य पूर्णतासिद्ध्यर्थं तदुद्यापनंकरिष्ये वृतान्वार्यः सर्वतोभद्रे पंचकलशान्प्रतिष्ठाप्य तदुपरि
सौवर्णींविष्णोः प्रतिमांमंत्रपंचकेनप्रतिष्ठापयेत् क्रमेणमंत्राः त्रीणिपदा० श्रवणर्क्षकलशे तद्विष्णोरिति शुक्लैकादशीकलशे नहिप्रासोविपन्यवइतिपूर्णि
माकलशे अतोदेवाइतिकृष्णैकादशीकलशे इदंविष्णुरित्यमाकलशे ततःक्रमेणकलशपंचके द्वादशतत्तद्देवता आवाहयेत् परितःगोवर्धनध
रम् अनंतं० पुंडरीकाक्षं० नित्यं० वेदगर्भं० यक्षं० पुरुषं० स्कब्रह्मण्यं० जयं० शौरिं० वैकुंठं० गरुडध्वजं० श्रवणस्थेकेशवं० नारायणं०
माधवम्० गोविंदं० विष्णुं० मधुसूदनं० त्रिविक्रमं० वामनं० श्रीधरं० हृषीकेशं० पद्मनाभं० दामोदरं० संकर्षणम्० शुक्लैकादश्याः
विधुं० शशिनं० शशांकं० चंद्रं० सोमं० उडुपं० मनोरमं० अमृतं० पावनं० हिमकृतं० निशाकरं० आप्यायनं० पूर्णिमायाः संकर्षणं०
वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्तमं० अधोक्षजं० नारसिंहं० अच्युतं० जनार्दनं० उपेंद्रं० हरिं० श्रीकृष्णं० कृष्णैकादश्याः महीधरंजगन्ना

तर्प्यप्रतिमांदत्वास्वयंभुंजीत एवमेवशुक्लैकादश्यांद्वादशमासेषुकेशवादिद्वादशनामानिक्रमेण तथाकृष्णैकादश्यांसंकर्षणादिद्वादशना-
मानि पूजायांजपादौज्ञेयानि कार्तिकादिक्रमः मार्गशीर्षादिर्वा अंते चतुर्विंशतिर्द्वादशैकांवा गांदत्वा यथाशक्ति ब्राम्हणान् भोजयेत् इ-
त्युभयैकादशीव्रतम् इतिश्रीमद्व्रतोद्यापनकौस्तुभे एकादशीव्रतानि अथद्वादशीव्रतानि अथभाद्रपदशुक्लद्वादश्यां श्रवणद्वादशीव्रत-
म् भविष्ये तच्चैकादशीयुतद्वादश्यांश्रवणयोगे कार्यम् बुधवारयोगे प्रशस्तम् प्रातर्नद्यादौ वरोवरेण्योवरदोवराहोधरणीधरः अपवि
त्रंपवित्रंमांकरोतुभगवान्हरि रित्यनेनतिलान्विलिप्यस्नात्वा नित्यकर्मनिर्वर्त्यसंकल्पयेत् तिथ्यादिसंकीर्त्य आत्मनः अखिलपाप-
क्षयपूर्वक पिशाचादिदुर्योनिनिरसनद्वाराश्री विष्णुलोकप्राप्त्यर्थं आचरितश्रवणद्वादशीव्रतोद्यापनंकरिष्ये इतिसंकल्प्य वृताचार्यः चतु-
र्द्वारोपशोभितमंडपांतर्वेदिकायां पीठदेवताः पूजयेत् आधारशक्त्यैनमः विमलायै॰ उत्कर्षिण्यै॰ ज्ञानशक्त्यै॰ क्रियाशक्त्यै॰ प्रव्हायै॰ सत्या
यै॰ मायायै॰ मध्येपरमदेवतायै॰ परितइंद्रादिलोकपालेभ्यो॰ तदुपरिपूर्णपात्रयुते कलशेगणपतिं॰ दुर्गां॰ क्षेत्रपालं॰ वास्तोष्पतिं॰ परित-
आदित्यादिनवग्रहदेवताः संपूज्यतदुपरिसर्वतोभद्रं प्रसार्यतत्रब्रह्मादिदेवताः संपूज्यतदुपरिकुशकृष्णाजिनं प्रसार्य तत्रद्रोणपरिमिततिलप
र्वतंकृत्वा तदलाभेगोधूमाः तत्रतिलपूरितपूर्णपात्रयुतकलशेद्वादशारयुतपद्मेहैमं वामनंत्रीणिपदेतिमंत्रेणासपूज्यांगपूजांकुर्यात् मत्स्यायत॰
पादौपू॰ कूर्माय॰ जानुनी॰ वराहाय॰ गुल्यं॰ नृसिंहाय॰ नाभिं॰ वामनाय॰ उदरं॰ परशुरामाय॰ दक्षिणभुजं॰ दाशरथिरामाय॰ वामभुजं॰ कृष्णा 
॰ मुखं॰ बौद्धाय॰ कर्णौ॰ कल्किने शिरः॰ ॐनमोभगवते वासुदेवाय सर्वांगंपूज॰ दधिभक्तनैवेद्यं प्रार्थयेत् नमस्तेदितिपुत्रायनमस्तेकश्यपात्म-

१ अदमणी इतिख्यातं परिमाणम्.

ज त्रिविक्रमायदेवाय वामनायनमोनमः ततोन्यग्रोधंकद्रुद्रायेतिमंत्रेणसंपूज्य शिक्यदध्यन्नेनयुतंजलपूरकं करकंचसंपूजयेत् तत्रक्रमेणमंत्रौ
शिक्योसिदधिभक्तोसिलंबितोसिमयोपरि सूत्रेणैवाश्रितोसित्वंवामनःप्रीयतामिति करकंपूजयिष्यामिसरितांसंगमेजलैः पंचरत्नसमायु-
क्तंतेनतुष्यतुवामनः ततःसर्वान्प्रार्थयेत् पर्जन्योवरुणःसूर्यःकेशवःसलिलंशिवः त्वष्टायमोवैश्रवणःसदापापहरंतुमे कथाश्रवणादिनारात्रिं
निनयेत् प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानम् वामनंपायसघृतसमित्तिलैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताः ब्र-
ह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये होममंत्राश्च इरावतीतिमंत्रेण पायसंघृतंच इदंविष्णुरितिसमित् त्रीणिपदेत्याज्यं विष्णोःकर्माणीति
तिलाः ततोद्वादशसंख्याकान्वरन्नादिनासंपूज्य दध्यन्नोपवीतगोपीचंदनयुतान् सुगंधजलपूरितान् द्वादशकरकांस्तेभ्योदद्यात्तत्रमंत्रः सु
गंधिजलसंपूर्णंदधिभक्तयुतंद्विजकरकंतेप्रदास्यामि वामनःप्रीयतामिति ततःवामनः प्रतिगृण्हाति वामनोवैददातिच वामनस्तारको स्मा-
कं वामनायनमोनमइत्यनेनसोपस्करपीठमाचार्यायदद्यात् व्रतपूर्तयेगांचदत्वा विप्रान्भोजयेत् इतिश्रवणद्वादशीव्रतं अथपौषकृष्णाद्वादश।
सुरूपद्वादशीव्रतम् भविष्ये अथवापौषेपुष्यर्क्षेयदातदावाकार्यम् तिथ्यादिसंकीर्त्य आत्मनोदौर्भाग्यदौर्वर्ण्यादिशमनपूर्वकमतुलसौभा-
ग्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसुरूपद्वादशीव्रतंकरिष्ये वृताचार्यः सर्वतोभद्रेतिलोपरिस्थकलशेहैमंलक्ष्मीयुतं विष्णुंसह
स्त्रशीर्षेतिसंपूज्यपरितः शंखचक्रगदापद्मंचसंपूज्यविष्णवेर्घ्यंदद्यात् नमःपरमशांतायविरूपाक्षनमोस्तुते सर्वसंकष्टनाशाय गृहाणा
र्घ्यंनमोस्तुते ततःतिलमिश्रितपक्वान्ननैवेद्यंदत्वास्वयमुपोष्यरात्रौजागरेत् प्रातरग्निंप्रति० अन्वादध्यात् अत्रप्रधानं विष्णुंगोमयतिल

१ कलश

र्पिः प्राशयेत् मूलमंत्रेणपंचगव्यमंत्रैर्वा पंचगव्यप्राशनं अंतेव्रतपूर्तयेकपिलांगांदत्वापीठंचदत्वाब्राह्मणान्संतर्प्य स्वयंभुंजीत अथप्रकारांतरे
णाभविष्योक्तं पूर्वोक्तनियमान्वितः पूर्ववद्विष्णुसंपूज्य तद्दक्षिणतस्तिलप्रस्थोपरिलौहींयमप्रतिमांसंपूज्यप्रार्थयेत् यदन्यजन्मनिकृतमिहजन्म
निवापुनः पापंमेप्रशमंयातुत्वद्देवप्रसादतइति पंचाहेपंचगव्याशीर्भिक्षाथाद्घ्र्यंपंचस्वप्यहःसुदद्यात् अनेनमंत्रेण वैष्याघ्रपादगोत्राय सांकृतिप्रवरा
यच अपुत्रायददाम्येतज्जलंभीष्मायवर्मणे अथमार्गकृष्णैकादश्यांवैतरणीव्रतम् भविष्योत्तरे तिथ्यादिसंकीर्त्यात्मनोयमलोकादर्शनपूर्वकवि-
ष्णुलोकप्राप्तिकामनया परमेश्वरप्रीत्यर्थंवैतरणीव्रतंकरिष्ये वर्षात्मकंव्रतं स्वयंनित्यकर्मनिर्वर्त्यरात्रौ पूर्वाभिमुखींकृष्णांसुरभिंसंस्थाप्य अग्र-
पादादारभ्यपश्चात्पादद्वयावधि गोपुच्छंसमासाद्यपितृन्तर्पणंकृत्वा शास्त्रविधिनासुरभिंपूजयेत् गोः अग्रपादाभ्यांनमः आस्याय० शृं
गाभ्यां० स्कंधाय० पुच्छाय० पश्चिमपादाभ्यां० सर्वांगेभ्यो० इतिसंपूज्य मार्गशीर्षादिमासचतुष्टयेओदनं पुनश्चैत्रादिषुयावकाशनं
पुनः श्रावणादिषुपायसं तदन्नस्यत्रयोभागागोर्गुरोःस्वार्थमेवच एवंप्रतिमासंकृत्वा वर्षांतेउद्यापनंकुर्यात् सर्वोपस्करंघृतसारदारुमयीं
शय्यां सौवर्णींसुरभिं आगावइतिमंत्रेणसंपूज्यसपत्नीकंवस्त्रादिनासंपूज्यतस्मैभारपरिमितलोहेनसहशय्यायुतांगांदद्यात् तत्रमंत्रः यज्ञसाधन
भूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवः प्रीयतामनयागवा ततोदक्षिणात्वेनहिरण्यंदत्वादीनानाथांश्चतर्पयेदिति इतिवैतरणीव्रतं अ
थद्वादशमासस्थोभयैकादशीव्रतोद्यापनं भविष्योत्तरे तिथ्यादिसंकीर्त्य आत्मानः अखिलपापक्षयपूर्वकविष्णुलोकप्राप्त्यर्थं एकादशीव्र-
तोद्यापनंकरिष्ये कृतनित्यक्रियोमध्याह्ने सूर्यायार्घ्यंदत्वा मंडले कलशेहेमंकेशवंसंपूज्य रात्रौजागरणंकृत्वा प्रातः पंचगव्यमाश्यब्राम्हणान्सं

१ घृतम् २ काष्ठांतर्वर्तीकठिणांशःसारः

यं० देवेंद्रं० देवकीसुतं० चतुर्भुजं० गदापाणिं० सुरेशं० सुलोचनं० चार्वंगं० चक्रपाणिं० सुमित्रं० असुरांतकं० अमायाः एवंषोडशोपचारैः पूर्वोक्त
पंचमंत्रैः संपूज्य षष्टिनामभिः षष्टिनमस्कारान्कृत्वा रात्रिं विनिनयेत् प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात् विष्णुं घृताक्तापूपपायस घृतपंचामृततिलद्रव्यैः
प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः श्रवणेदेवताः घृताक्तापूपैः शुक्लैकादशीदेवताः गुडपायसेन पूर्णिमादेवताः घृतपायसाभ्यां कृष्णैकादशीदेवताः
पंचामृततिलोदनैः अमादेवताश्च तिलमुद्गगुडोदनैः प्रत्येकमेकैकयाज्याहुत्या ब्रह्मादि देवताश्चैकैकयाज्याहुत्या यक्ष्ये ततः आचार्यं संपूज्य पीठं व्रतपूर्तये-
गां च दत्वा विभवे सति सस्यवतीं भूमिं च दत्वा अन्येभ्यः पंचब्राह्मणेभ्यो गोमेदं पुष्परागं वैडूर्यं नीलं माणिक्यं चेति पंचरत्नानि दक्षिणापुरःसरं सहिरत्नानी-
निमंत्रेण दत्वा षष्टिब्राह्मणान् परमान्नेन संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत एवं कृते पंचमहापातकादिभ्यो मुक्तो भवति इति विष्णुपंचकव्रतं इति-
श्रीमच्चिंतपावन० व्रतोद्यापनकौमुद्यां द्वादशीव्रतानि अथ त्रयोदशीव्रतानि आषाढशुक्लत्रयोदश्यां जयापार्वतीव्रतं भविष्ये विंशतिवर्षात्मकं षट्दि
नात्मकं त्रयोदशीमारभ्य तृतीयापर्यंतं प्रत्यहं देवं पूजयेत् तिथ्यादि संकीर्त्य आत्मनो वैधव्यनाशाखंडसौभाग्यपुत्रपौत्रादिप्राप्तिद्वारा श्रीउमामहेश्वरप्रीत्य-
र्थं जयापार्वतीव्रतं करिष्ये मंडले उक्तप्रकारेण कलशोपरि हेमसिंहोपरि सुवर्णरजतनिर्मितो उमामहेश्वरौ गौरीमिमायेति तत्पुरुषायेति मंत्राभ्यां संपूजयेत् सु-
वासिनीं संपूज्य स्वयं नक्तं कुर्यात् स्वभक्षणनियमस्तु पंचाब्दं यावनालैः पंचाब्दं लवणवर्जितयवैः पंचाब्दमिक्षुरसवर्जिततंडुलैः पंचाब्दं मुद्गैः यूथिकादंत-
काष्ठं घृतान्तेपायस तिलाभ्यां अष्टोत्तरसहस्रं हुत्वा विंशति मिथुनानि वस्त्रादिना संपूज्य पक्वान्नसौभाग्यद्रव्ययुतं वायनं सदक्षिणाकं दत्वा व्रतपूर्तये आचार्या-
य गां च दत्वा सर्वरसयुक्तं स्वयं भुंजीत इति जयापार्वतीव्रतं अथ भाद्रपदशुक्लत्रयोदश्यां गौरीत्रिरात्रिव्रतं भविष्ये वर्षत्रयात्मकं तिथ्यादि संकीर्त्य

१ बहुधान्योत्पत्तिहेतुभूता

मंडले उक्तप्रकारेण सौवर्णीं लक्ष्मीनारायणप्रतिमां
सत्पुत्रप्राप्तिपूर्वकं सुखसौभाग्याद्यभिवृद्धिद्वारा श्रीलक्ष्मीनारायणप्रीत्यर्थं गोत्रिरात्रिव्रतं करिष्ये मंडले उक्तप्रकारेण सौवर्णीं लक्ष्मीनारायणप्रतिमां
गाव आगावइतिमंत्रेण संपूज्य अहोरात्रं दिनत्रयं घृतदीपं दद्यात् दिनत्रयमर्घ्यदाने विशेषः क्रमेण बीजपूरं॰ दाडिमं॰
॰ प्रत्यहं हविष्यान्नपूरितं करकं दंपतीभ्यां दद्यात् पायसोपहारः स्वयं दिनत्रयमुपोषणं कार्यम् चतुर्थेन्हि पीठं धेनुत्रयं एकां गां नन्मौल्यं
वा दत्वा ब्राह्मणभोजनपुरःसरं स्वयं भुंजीत एवं चरित्वा अंते उक्तविधिना वृताचार्यः मंडले देवं संपूज्य होमं कुर्यात् तद्यथा अग्निं प्रतिष्ठाप्य
न्वादध्यात् लक्ष्मीनारायणं अष्टोत्तरशतसंख्याकाहुतिभिः पायसद्रव्येण इदं विष्णुरिति मंत्रेण सुरभिं गाव आगावइतिमंत्रेण पायसद्रव्येणाष्टो
त्तरशतसंख्याकाहुतिभिर्यक्ष्ये ततो वेणुपात्रस्थं नारिकेलद्राक्षाखर्जूरदाडिमबीजपूरसौभाग्यद्रव्ययुतं वायनं पूजनदक्षिणापुरःसरं दंपती-
भ्यां दद्यात् सवत्सां गां सालंकारां आचार्याय दत्वा पीठं च यथाशक्त्या ब्राह्मणान्संतर्प्य स्वयं भुंजीत इति गोत्रिरात्रिव्रतम् अथ शोकत्रिरा
यस्मिन्कस्मिन्मासे त्रयोदश्यां शुभतिथौ कार्यम् तिथ्यादि संकीर्त्य आत्मनः शोकदुःखादिनाशपूर्वकाभीष्टफलप्राप्तिद्वारा श्री
अशोकत्रिरात्रिव्रतं करिष्ये इति संकल्प्य मंडले राजताशोकवृक्षे सौवर्णीः शिवसीतारामलक्ष्मणप्रतिमास्तत्त-
न्मंत्रैः संपूज्य अर्घ्यं दद्यात् तत्र मंत्रः अशोकवाटिकामध्ये सीतया त्वं प्रसादितः अशोक संपन्नफलो गृहाणार्घ्यं मयार्पितम् १
गौर्या लक्ष्म्या तथेंद्राण्या अरुंधत्या महेश्वर त्वं समाराधितः पूर्वमशोकफलदो भव २ शिवस्य रावणस्य वधार्थाय उत्पन्नस्त्वं सही-
विष्णोरंशोसि देवेश गृहाणार्घ्यं नमोस्तुते ३ रामस्य तातभक्त्या यन्मुखं चीरं धृत्वा यो हि ययौ वनम् सौमित्रेय महाभाग गृहाणा-

१ मातुलिंग

र्घ्यंनमोस्तुते ४ लक्ष्मणस्य अवनीतलसंभूते सीते सर्वांगसुंदरि गृहाणार्घ्यं मयादत्तं पूज्ये जनकनंदिनि ५ सीतायाः ततः प्रार्थयेत् अ-
शोक शोकहर्तात्वं शोकं नाशय मे प्रभो मातृपितृपत्नीनांच श्वशुराणां तथैवच अशोकत्वं शोकहरो भव सर्वत्र नः कुले एवं त्रिरात्रं चरित्वांते
व्रतपूर्तये गांच दद्यात् इति अशोकत्रिरात्रव्रतम् अथ कार्तिकादिमासेषु त्रयोदश्यां प्रदोषव्रतम् वर्षात्मकं यावज्जीवं वा शनियोगे महाफ-
लं भौमयोगे ऋणमोचनं तिथ्यादि संकीर्त्य आत्मनः अखिलपापक्षयशत्रुपराजयपूर्वकमायुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धि द्वारा श्रीउमा
महेश्वरप्रीत्यर्थं आचरितप्रदोषव्रतोद्यापनं करिष्ये वृताचार्यः उक्तप्रकारेण लिंगतोभद्रस्थे ताम्रकलशे रौप्यपूर्णपात्रयुते सौवर्णसांबसदाशि
वं पुरतो राजतवृषभं तत्तन्मंत्रैः प्रतिष्ठाप्य परितः असितांगभैरवाय० १ रुरुभैरवाय० २ चंडभैरवाय० ३ क्रोधभैरवाय० ४ उन्मत्तभैरवाय० ५
भीषणभैरवाय० ६ संहारभैरवाय० ७ कपालभैरवाय० ८ कालभैरवाय० ९ इति मूर्तिस्थाप्य पूजयेत् मूलमंत्रेण न्यासं कृत्वा पंचब्रह्ममंत्रैः
पूजयेत् सद्योजातादि० ५ प्रकारांतरेण पूजन विष्णुं० ब्रह्माणं० भास्करं० सोमं० पूर्वादिक्रमतः प्रथमावरणे जयं १ विजयं० २ गणपतिं० ३ दु
र्गां ४ द्वितीये नंदीश्वरम्० १ क्षेत्रपालं० २ वास्तोष्पतिं० ३ वायुं० ४ तृतीये सप्तर्षीन् चतुर्थे भूतनाथं० पंचमे इंद्रादीन् षष्ठे कपालिनं० सप्तमे गंध
र्वान् अष्टमे सद्योजातेत्यासनं वामदेवायेति पाद्यं अघोरायेत्यर्घ्यं तत्पुरुषायेत्याचमनीयं ईशानायेति स्नानं० त्र्यंबकमिति वस्त्रं यज्ञोप
वीतं उत्तरीयंच नमः सोमायेति गंधः नमः शंभवे इत्यक्षतान् इमारुद्रायेति पुष्पाणि एवापित्रेति बिल्वदलानि मानस्तोकेति धूपं आतेपितरिति दी
पं त्वादत्तेति नैवेद्यं कद्रुद्रायेति तांबूलं इमारुद्रायस्थिरधन्वने इति दक्षिणाम् महिक्षिपेणाक्षम्येति मंत्रपुष्पम् यातेदिद्युदिति नमस्कारः पुनर्नाममंत्रेण अ

ष्टौप्रदक्षिणानमस्कारांश्चकुर्यात् भवाय॰ १ महादेवाय॰ २ रुद्राय॰ ३ नीलकंठाय॰ ४ शशिमौलिने॰ ५ उग्राय॰ ६ भीमाय॰ ७ ईशानाय॰ ८ ॰ लोर्घ्यंरजतादिपात्रे क्षीरकुशघृतदधितंडुलसिद्धार्थगंधपुष्पादिक्षिप्त्वा सजलं दद्यात् भयरोगादिदारिद्र्यपापक्षुदपमृत्यवः ऋणशोकमनः-
पापनश्यंतु मम सर्वदा इत्यनेन त्रिवारमर्घ्यं दद्यात् ततः प्रार्थयेत् प्रसीद देवदेवेश प्रसीद परमेश्वर प्रसीद सोम सर्वज्ञ प्रसीद करुणाकर ततो-
ब्राम्हणान् संतर्प्य रात्रिं निनयेत् प्रातरग्निं प्रतिष्ठाप्यान्वाद्ध्यात् प्रधानं उमामहेश्वरं पलाशसमिद्बिल्वपत्र पायसाज्य द्रव्यैः प्रत्येकमष्टोत्तरशतसं-
ख्याकाहुतिभिः पीठदेवताः ब्रम्हादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये ततः पीठं गां च दत्वा ब्राम्हणान् भोजयेदिति इति प्रदोषव्रतम् अथ मार्ग-
शीर्षशुक्लत्रयोदश्यां अनंगत्रयोदशीव्रतम् वर्षात्मकं मासि मासि पूजादिकं भिन्नम् तिथ्यादि संकीर्त्य आत्मनो दुर्भगत्व वंध्यात्वमृतवंध्या
त्वादिदोषनिरसनपूर्वकं सौभाग्य पुत्रपौत्रसुखप्राप्ति द्वारार्द्धनारीश्वरप्रीत्यर्थं अनंगत्रयोदशीव्रतं करिष्ये इति संकल्प्य उक्तविधिना पीठे अ
रूपिणं महेशं पूजयेत् विशेषो लिख्यते सर्वमासेषु त्रयोदश्यामुपोषणम् मार्गशीर्षे मल्लिकादंतकाष्ठं नारिंगेणार्घ्यं अनंगो देवः नैवेद्यं
फेणिकाः श्वेतपुष्पं मधुप्राशनम् रात्रौ जागरणम् प्रातः ब्राम्हणसुवासिनीभोजनपुरःसरं स्वयं भुंजीत पौषे उदुंबरदंतकाष्ठम् जातीपुष्पं दा
डिम्बेनार्घ्यं नाट्येश्वरो देवः वटकनैवेद्यं चंदनभक्षणं माघे विष्णुक्रांतदंतकाष्ठं कुंदपुष्पं बीजपूरेणार्घ्यं शर्करानैवेद्यं योगेश्व-
रो देवः मौक्तिकभक्षणं फाल्गुने करंजकाष्ठं पद्मपुष्पं खर्जूरीफलं पयोनैवेद्यं वीरेश्वरो देवः नारिकेलभक्षणं चैत्रे मल्लिका ३८
दमनकपुष्पं॰ दमनकेन अर्घ्यं खर्जूरीनैवेद्यं विश्वरूपो देवः कर्पूरभक्षणं वैशाखे अपामार्गदंतकाष्ठं मल्लिकापुष्पं तेनैवार्घ्यं

नमः पूर्वेद्युर्निमंत्रितान् चतुर्दशब्राम्हणान्वस्त्रादिनासंपूज्यस्थापितचतुर्दशकलशान् पक्वान्नादिपूरितान्दक्षिणासहितान् तेभ्योगृ
हाणत्वंद्विजश्रेष्ठेतिमंत्राभ्यांदद्यात् व्रतपूर्तयेगांचदद्यात् क्षमापयेत् क्रियाहीनंभक्तिहीनंद्रव्यहीनंतथैवच मंत्रहीनंकृतंयच्चपरिपूर्णंत-
दस्तुमे ततोब्राह्मणभोजनपुरःसरंस्वयंभुंजीत इत्यनंतचतुर्दशीव्रतम् अथकदलीव्रतोद्यापनं भविष्ये ज्येष्ठशुक्लचतुर्दश्यामुक्तम् तत्रैवपुनः
कार्तिकेमाघेवैशाखेवाकार्यम् अथवास्तादिरहितेपुण्यमासेपौर्णमास्यांवाकार्यं स्कांदेतु ज्येष्ठशुक्लचतुर्दश्यामुक्तं तत्रैव त्रिदिनमुपोष्य पौ
र्णमास्यामाधिवासनमुक्तं तत्रैवयस्मिन्देशेकदलीनलभ्यते तदासुवर्णकदलीकृत्वा विधिनाहोमादिकंकृत्वादद्यादित्युक्तम् अथप्रयोगः तत्र
व्रतीपूर्वेद्युरेकभुक्तोनक्ताशीवाद्वितीयेन्हिनद्यादौस्नात्वापंचगव्यंप्राश्यसंकल्पंकुर्यात् तिथ्यादिसंकीर्त्यात्मनइहजन्मनिजन्मांतरेवासौभा
ग्यपुत्रपौत्रलाभलक्ष्मीवृद्धिसर्वदुःखनाशनपूर्वकंउमामहेश्वरप्रीत्यर्थंकदलीव्रतोद्यापनंकरिष्ये इतिसंकल्प्य यदाज्येष्ठादिद्वादशमासे-
षुउक्तपूजादिनकृतंतदोद्यापनदिने आदौक्रमेणपूजादिकंकुर्यात् कदल्याआलवालंकृत्वाउपरिमंडपंचतुर्द्वारिकृत्वापूजयेत् तत्रज्येष्ठेजा-
तीदंतकाष्ठं गौरीतिकदलीनाम पाटलपुष्पं कदल्यैकामदायिन्यैमेधायैचनमोनमः रंभायैभूतसारायैसर्वसौख्यप्रदेनमः सर्वमासेष्वयंपू-
जामंत्रः एवंषोडशोपचारैःसंपूज्योत्तमोदकेनसिंचयेत् तत्रमंत्रः यथारंभेविवृद्धिस्त्वच्छाखादीनांसदाभवेत् तथावर्धयमांदेविसेचना
त्पार्वतीप्रिये ततःप्रार्थयेत् यथा यथाहिप्रसवोवर्धतेकदलीतव तथामनोरथानांमेप्रभवोभवतुस्वयम् आषाढेक्रमेणदंतकाष्ठंकदलीना
मपुष्पंचज्ञेयम् करंजंईश्वरीबिल्वपत्रं श्रावणेकुमुदं कुमुदाभावेपुत्तलिका भगवती कदंबः आश्विनेमालती अतुलाजाती कार्ति-

शत तिलपायसाज्याहुतिभिः ब्रम्हादिदेवताश्चैकैकमाज्या हुत्वायक्ष्ये ततः पीठंव्रत पूर्तये गांच आचार्याय दत्वा ब्राम्हणान् भोजयेदिति नृसिंहज
यंतीव्रतम् अथानंतव्रतम् तच्च भाद्रपदशुक्लचतुर्दश्यां चतुर्दशवर्षात्मकं यावज्जीवं वा तच्च त्रिमूर्तोदयव्यापिन्यां कार्यम् तिथ्यादि संकीर्त्य आत्म
नो निखिलपापक्षयनिर्मुक्तिपूर्वकउत्तमसिद्धिपुत्रपौत्रपूरितविविधभोगधनधान्यपरमगतिप्राप्तिकामनया चतुर्दशवर्षाचरितानंतव्रतोद्यापनंक
इति संकल्प्य नित्यवत् स्वयं देवं संपूजयेत् ततो वृताचार्यः सर्वतोभद्रे ब्रम्हादिदेवता आवाह्य तदुपरि कलशं प्रतिष्ठाप्य तत्र यमुना मावाह्य-
ज्य तदुपरि अक्षतपूरितपूर्णपात्रं निधाय तत्राष्टदलं विरच्य तत्र स्वर्णनिर्मितं चतुर्दशग्रंथियुतं अनंतं सहस्त्रशीर्षेति-
तदुत्तरतः सप्तधान्योपरि विस्तृतशय्योपरि स्वर्णनिर्मितं लक्ष्मी सहितं हैमं हलमुसलयुतं अनंतं देवं अतो देवा इति इदं विष्णुरिति मंत्रेण स्थाप
तमयोः पुरुषसूक्तेन श्रीमदनंताय नम इति नाममंत्रेण पूजा वार्षिकवत्कार्या अथ ग्रंथिदेवताः पूजयेत् क्रमेण विष्णुः १
२ आदित्यः ३ सहस्त्राक्षः ४ पितामहः ५ इंद्रः ६ पिनाकी ७ विघ्नेशः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४
: शय्यायां प्रतिमायाः परितः शंखं १ चक्रं २ गदां ३ पद्मं ४ तद्बहिः नाममंत्रेण अनंतं १ कपिलं २ दक्षं ३ मनुं ४ प्रजापतिं ५ संकर्षणं ६
कालं ७ वनमालिनं ८ त्रिविक्रमं ९ अहोरात्रं १० अर्धमासं ११ मासं १२ ऋतून् १३ अयने १४ संवत्सरं १५ इदुवत्सरं १६ अनुवत्सरं १७ वत्सरं १८
ध्यक्षं १९ अजितं २० सर्वभूतं २१ प्रद्युम्नं २२ अनिरुद्धं २३ श्रीधरं २४ पुरुषोत्तमं २५ वामनं २६ पद्मनाभं २७ विश्वरूपं २८ त्रिविक्रमं २९
३० अच्युतं ३१ तद्बहिः अष्टवसून् ८ तद्बहिः एकादशरुद्रान् ११ तद्बहिः द्वादशादित्यान् १२ तद्बहिः नवग्रहान् ९ तद्बहिः अष्टभैरवान् ८ त

हृहिः मेषादिद्वादशराशीन् १२ नद्भुहिः अश्विन्यादिनक्षत्राणि २८ नद्भुहिः ब्राह्म्यादिसप्तमातृः ७ तद्भुहिः चैत्रादिद्वादशमासान् १२ तद्भुहिः दी-
स्यादिशक्तीः तद्भुहि. विष्कंभादियोगान् २७ आवाह्यपीठपरितः फलपक्वान्नपूरितान् चतुर्दशकुंभांश्च चतुर्दशनामभिः स्थापयेत् पूजयेच्च ते-
चमंत्रा अनंतायनमः १ संकर्षणायनमः २ कमलाय० ३ शेषाय० ४ वासुदेवाय० ५ विश्वनाथाय० ६ विश्वरूपाय० ७ पद्मनाभाय० ८ दामोदराय० ९
जगन्नाथाय० १० चतुर्मुखाय० ११ श्रीकंठाय० १२ केशवाय० १३ सर्वात्मने० १४ ततः पुष्पपूजोत्तरं कलशस्थापनोक्तचतुर्दशनामभि. अंगा
· जयेत् अनंतायनमः पादौपू० सकर्षणाय० गुल्फौपू० कालाय० जंघेपू० शेषाय० जानुनीपू० वासुदेवाय० ऊरू० विश्वाय० गुह्यं० विश्व-
रूपाय० कटिं० पद्मनाभाय० नाभिं० दामोदराय० उदरं० जगन्नाथाय० हस्तद्वयं० चतुर्भुजाय० बाहू० श्रीकंठाय० कंठं० केशवाय० ललाटं०
सर्वात्मने० शिरः० अनंताय० सर्वांगं० ततः नमस्तेदेवदेवेशनमस्ते धरणीधर नमस्तेसर्वनागेंद्र अनंतायनमोनमइतिनमस्कारः ततः प्रार्थ
येत् अनंतकामान्मेदेहिसर्वकामफलप्रद अनंतायनमस्तुभ्यं पुत्रपौत्रान्प्रवर्धय व्रतेनानेनसंतुष्टोभवत्विहसदामम ततः पुराणपठणा
देनारात्रिंनिनयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं श्रीमदनंतमश्वत्थसमित्तिलव्रीहियवघृतपायसद्रव्यैः प्रत्येकमष्टोत्तरशतसं
ख्याहुतिभिः पीठदेवताः आवरणदेवताश्चैकैकयाज्याहुत्या पायसाज्याहुत्या वाब्रम्हादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये स्थापनमंत्रैर्होमः
अत्रकेचिद्राग्निहोममिच्छंति ब्राम्हणभोजनादिसर्वं दिवैव ततः पीठंसंपूज्य वस्त्रादिनाआचार्यंसंपूज्य पीठंदद्यात् तत्रमंत्रः गृहाणत्वं द्वि-
जश्रेष्ठसमस्तफलदायक त्वत्प्रसादादहं विप्रविमुच्येभवबंधानात् अनंतःप्रतिगृण्हातिअनंतोवैददातिच अनंतस्तारकोस्माकंअनंतायनमो

नैवेद्यमपूपाः महारूपोदेवः जातीफलभक्षणं ज्येष्ठे सहदेवीकाष्ठं बकुलपुष्पं श्रीफलेनार्घ्यं मंडकनैवेद्यं लवंगभक्षणं प्रद्युम्नोदेवः आषाढे नागि
गकाष्ठं कदंबपुष्पं नारीकेरेणार्घ्यं उमापतिर्देवः तिलबीजभक्षणं श्रावणेजातीकाष्ठं पद्मपुष्पं जंबूफलेनार्घ्यं क्षीरसारनैवेद्यं ० शूलपाणिर्देवः ग
धोदकभक्षणं भाद्रपदेकंकतीकाष्ठं चंपकपुष्पं दाडिमेनार्घ्यं पूगफलनैवेद्य सद्योजातोदेवः अगरुभक्षणं आश्विनेकंकतीकाष्ठं
करवीरपुष्पं कर्कटीफलेनार्घ्यं त्रिदशाधिपोदेवः शुभ्रमंडकनैवेद्यं कनकांबुप्राशनं कार्तिकेकदंबकाष्ठं रक्तोत्पलपुष्पं कूष्मांडेना
र्घ्यं पूरिकानैवेद्यं जगदीश्वरोदेवः दमनकभक्षणं सर्वत्रप्रदोषेपूजनंभक्षणंच एवंचरित्वांतेउद्यापनंकुर्यात् वृताचार्यः लिंगतोभद्रस्थ
कलशेसौवर्णमर्धनारीश्वरं महेशंपूजयेत् मातरग्निंप्रतिष्ठाप्यान्वादध्यात् महेशंपायसद्रव्येण अष्टोत्तराधिक सहस्रमष्टोत्तरशतंवा तत्संख्या
काहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततःछत्रोपानह कमंडलुभाजन वस्त्रपुरःसरं आचार्यसंपूज्यद्वादशाष्टौचत्वारिवादंपतीन्संपू
ज्यपीठंगांच आचार्यायदत्वाब्राम्हणभोजनपुरःसरंस्वयंभुंजीत इत्यनंगत्रयोदशीव्रतम् इतिश्रीमच्चिंतपावन० व्रतकौमुद्यांत्रयोदशीव्रतानि अथ
चतुर्दशीव्रतानि अथनृसिंहजयंतीव्रतम् वैशाखशुक्लचतुर्दश्यांप्रदोषव्यापिन्यांनृसिंहजयंतीव्रतम् स्वातीनक्षत्रशनिवार सिद्धयोगवणि-
जकरणयोगेमहापुण्यदं तिथ्यादिसंकीर्त्यआत्मनः अखिलपापक्षयपूर्वक शत्रुजयसुखसाधनावाप्तिद्वाराश्रीनृसिंहप्रीत्यर्थं आचरितस्य
नृसिंहजयंतीव्रतस्योद्यापनंकरिष्ये इतिसंकल्प्य वृताचार्यःसर्वतोभद्रस्थकलशेहैमंलक्ष्मीनृसिंहं ॐ नमोनृसिंहायेतिमूलमंत्रेणगा
यत्र्यावाप्रतिष्ठाप्योक्तविधिनासंपूजयेत् मातरग्निंप्रतिष्ठाप्यअन्वादध्यात् लक्ष्मीनृसिंहंविष्णोर्नुकमितिमंत्रेणअतोदेवेतिवाअष्टोत्तरश-

केशतपत्रंकीर्तिः शतपत्रंमार्गशीर्षेचंपकं मार्गदायिनीचंपकं पौषेकमलंपुष्टिकरी कमलंमाघेदाडिमं माहेश्वरीदाडिमं फाल्गुनेमधुकं मदोत्कटामधु
कंचैत्रेमल्लिकाचैतन्यरूपामल्लिका वैशाखेअपामार्गविमलाबहुविधपुष्पाणि द्वादशमासेषुक्रमेणधूपान्नैवेद्यांश्च चंदनं अगुरु कुंकुमं कर्पूरंगुग्गुलंका
श्मीरं देवदारुधूपं दशांगंगुग्गुलंदेवदारुगोरोचनं मेषश्रृंगं वटकाः उदुंबराः अपूपाः मोदकाः मंडकाः पायसं घृतोदनं मुद्गचूर्णंसोहालिकाखंड वेष्टिका
फेनिकादध्योदनं एवंस्वयंसंपूजयेत् ततआचार्यः कदलीमूलदेशेमृदावेदींविधायतत्रलिंगतोभद्रेउक्तविधिनाब्रह्मादिदेवताआवाह्य तदुपरिकल
शस्थपूर्णपात्रेहैमंशिवंगौरींचत्र्यंबकमिति कद्रुद्रायेतिवागौरीर्मिमायेतिगायत्र्यावामंत्राभ्यांप्रतिष्ठाप्य पूजयेत् पुरतोवृषभंराजनंचततः क-
दलींपूजयेत् कदल्यैकामदायिन्यैइत्यनेन कदलीपरितोलोकपालानावाह्य ततस्तैलहरिद्रादिनामंगलस्नानं कृत्वा स्त्रीभूषणैर्भूषयित्वा आवाहना-
द्युपचारैःसंपूजयेत् पुरतःआदर्शंचामरंछत्रंचउपरिपूरिकाबंधनंपरितइक्षुदंडवेष्टनं कदल्याश्चतुर्दिक्षु गुड पिष्टाचलंजीरकं लवणंशुभ्राक्षताः
ततः पुराणपठनादिनारात्रिंनिनयेत् प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् अत्रप्रधानं शिवंगौरींकदलींचपलाशसमिन्मधुसर्पिस्तिलव्रीहिद्रव्यैः
प्रत्येकमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वातत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या क्रमेणहोममंत्राः कद्रुद्राय० गौरीर्मि
मायेति० ॐ आंह्रीं क्लीं कामिन्यैविद्महे त्रैलोक्यक्षोभिण्यैधीमहि तन्नःकदलीप्रचोदयात् ततःउत्तरपूजांकृत्वा प्रार्थ्य उमेगौरिनम
स्तुभ्यंनमस्तेविश्वधारिणि परमानंदरूपिण्यैकदल्यैतेनमोनमः ततःचतुर्विंशतिःषोडशाष्टौयथाशक्त्या वामिथुनानिवस्त्रादिना संपूज्य वं
शपात्रस्थसौभाग्यद्रव्ययुतं फलदक्षिणादियुतंवायनंदद्यात् ततःआचार्यायसंपूज्य पीठंकदलींचदद्यात् तत्रमंत्रः कदलींकामदात्रींचस

वसौख्यप्रदायिनीम् गिरिजाहररूपांवै ब्राह्मणायददाम्यहम् गृहाणत्वं द्विजश्रेष्ठ समस्तफलदायक कदल्याश्च प्रदानेन पूर्णाः संतु मनोर-
थाः कदलीप्रतिगृण्हाति कदलीवैददातिच कदलीतारकाचैव कदल्यैते नमोनमः कदलीदानसांगतासिध्यर्थं हिरण्यं दक्षिणात्वेन दद्यात्
व्रतपूर्तये गांचदत्वा न्यान्ब्राम्हणान् दक्षिणादिभिः प्रतोष्यब्राम्हणान् सदन्नेन संतर्प्य आशिषोगृहीत्वा स्वयंभुंजीत इतिकदलीव्रतम् अ-
थवैकुंठचतुर्दशीव्रतम् कार्तिकशुक्लचतुर्दश्यां अरुणोदयव्यापिन्यांकार्यम् तिथ्यादिसंकीर्त्य आत्मनः सर्वपापक्षयपूर्वक शिवप-
दप्राप्तिकामनयाचरिते वैकुंठचतुर्दशीव्रतोद्यापनं करिष्ये वृताचार्यः लिंगतोभद्रस्थकलशेहेमं विश्वेश्वरं पूजयेत् प्रातरग्निंप्रतिष्ठाप्य घृता-
क्ततिलैः अष्टोत्तरशतं ॐ नमः शिवायेतिमंत्रेणहुत्वा व्रतपूर्तयेगांचदद्यात् इतिवैकुंठचतुर्दशीव्रतम् अथशिवरात्रिव्रतम् स्कंदपु-
राणे चतुर्दशवर्षात्मकं यावज्जीवं वा माघकृष्णचतुर्दश्यां निशीथव्यापिन्यांकार्यम् तिथ्यादिसंकीर्त्य आत्मनः सर्वपापक्षयपूर्व-
कअक्षयभोगमोक्षप्राप्त्यर्थं आचरितशिवरात्रिव्रतोद्यापनंकरिष्ये वृताचार्यः अन्यैर्द्वादशब्राम्हणैः सहपूजामारभेत् द्वादशलिंगोद्भवे पीठेउ-
क्तविधिना ब्रम्हादिदेवताः संपूज्य द्वादशलिंगेषु द्वादशकलशान्मध्ये एकंतदुपरि पूर्णपात्राणिनिधाय तत्रहैमीः प्रतिमाः पूजयेत् तत्रमध्य-
मकुंभेउमामहेश्वरं त्र्यंबकमिति मंत्रेणप्रतिष्ठाप्य पुरतोराजतं वृषभंच प्रतिष्ठापयेत् द्वादशब्राम्हणाद्वादशलिंगस्थकलशेषु द्वादशप्रतिमाः
पूजयेयुः तत्रप्राच्यां महेशं अघोरं पशुपतिं दक्षिणस्यांपंचवक्त्रं उग्रंरुद्रं पश्चिमायां भवंशर्वं शंभुं उत्तरेशिवं भीमंभीमपराक्रमं प्रतिकल-
शैलोकपालान् इतिप्रतिष्ठाप्य रुद्राभिषेकपूर्वकं षोडशोपचारैः पूजयेत् प्रतियामंपूजाकार्या एकैववा पुराणपठनादिनारात्रिंनिन-

येत् प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात् अन्नप्रधानं उमामहेश्वरं पायसबिल्वपत्रतिलदूर्वाघृतद्रव्यैः प्रत्येकं अष्टोत्तरशतसंख्याकाहुति-
भिः द्वादशकलशस्थदेवताः अष्टाष्टसंख्याकाहुतिभिः तैरेवद्रव्यैः परिवारदेवताः ब्रम्हादिदेवता श्चैकैकयाज्याहुत्यायक्ष्ये एवं होमं संपाद्य-
पीठदेवताः पूजयेत् अथांगपूजा शर्वाय० पादौ० पशुपतये० ऊरू० रुद्राय० कटी० शर्वाय० बाहू० सद्योजाताय० कंठं० शंभवे० मुखं० वा-
मदेवाय० चक्षुषी० भीमाय० भ्रुवौ० उमापतये० ललाटं० सर्वव्यापिने० मूर्धानं० ततः आचार्यं द्वादशब्राम्हणांश्च वस्त्रादिना संपूज्य ते-
भ्यः प्रतिमासहित कलशान् दद्यात् तत्रमंत्रः शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो तवरूप प्रदानेन मम संतु मनोरथाः ततो व्रत पूर्तये त्रयो-
दशगाः अथवा एकांगां आचार्याय अन्येभ्यो दक्षिणां दद्यात् ब्राह्मणान् संतर्प्य स्वयं भुंजीत लिंगपुराणे तु प्रकारांतरेण उक्तं मंडले उमामहेश्व-
रं संपूज्य प्रातः पूर्वोक्त रीत्या तिलव्रीहियवैरष्टोत्तरशत होमं हुत्वा चतुर्दश ब्राम्हणांश्चतुर्दश नामभिः संपूज्य जलपूरित चतुर्दश कलशान् व-
स्त्रदक्षिणासहितान् दद्यात् चतुर्दश नामानि अजैकपादहिर्बुध्न्यो भवः शर्व उमापतिः रुद्रः पशुपतिः शंभुर्वरदः शिव ईश्वरः महादेवो हरो भी-
मो नामान्येव चतुर्दश एतैर्होमं प्रकर्तव्यः कुंभदाने पि नान् स्मरेत् अष्टाहुति संख्याको बिल्वपत्रैर्होमः अन्यत्समानं इति शिवरात्रिव्रतम्
अथ मलमासव्रतम् पाद्मे मलमासस्य कृष्णपक्षे चतुर्दश्यां त्रयोदश्यां अष्टम्यां वा तृतीयायां नवम्यां वा ऽन्यतमतिथौ वा कार्यम् तिथ्यादि संकी-
र्त्य आत्मनो दारिद्र्य दुःखपापनाशन सत्पुत्रप्राप्तिपूर्वका तुलभोगसिद्ध्यै सवितृरूप जनार्दनप्रीत्यर्थं च मलमासव्रतं करिष्ये इति संकल्प्य
मध्यान्हे सर्वतो भद्रस्थ कलशे हैमं लक्ष्मीयुतं जनार्दनं संपूज्य नानाविधपक्वान्न नैवेद्यं दद्यात् फलपुष्पोपेतं अर्घ्यं दद्यात् तत्रमन्त्रः देवदेव जग

नाथप्रलयोत्पत्तिकारक गृहाणार्घ्यंमयादत्तंरूपांकुरुममोपरि ततःसपत्नीकं ब्राम्हणंवस्त्रादिनासंपूज्यत्रयस्त्रिंश ; स्यपात्रेनि-
धायसघृतंहिरण्यंवायनंब्राम्हणायनिवेदयेत् तत्रमंत्रः विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने नरकोत्तारणार्थाय अच्युतः
त्वा छत्रोपानद्भूषणाच्छादनादियुतांशय्यांच दत्वापीठंव्रतपूर्तयेगांचदत्वानानाविधपक्वान्नैर्ब्राम्हणान् संतर्प्य आशिषोगृहीत्वा
इतिश्रीमच्चित्तेपावन॰ व्रतोद्यापनकौस्तुभेचतुर्दशीव्रतानि अथपौर्णमासीव्रतानि तत्रज्येष्ठशुद्धपूर्णिमायांपूर्वविद्धायांवटसावित्री
व्रतम् तच्चत्रयोदशीमारभ्यपूर्णिमांतंकर्तव्यं तदुक्तंस्कंदभविष्ययोः पूर्णिमायांवाकार्यं तत्रविधिः नद्यादौतिलामलकरजनी
पनपूर्वकंस्नात्वावार्षिकवत्पूजादिकंनिर्वर्त्यउद्यापनसंकल्पंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्य ममभर्तुःपुत्रादीनांच आयुरारोग्यैश्व-
र्यादि इहजन्मनिजन्मांतरेच आत्मनः अवैधव्यप्राप्तये आचरितवटसावित्रीव्रतोद्यापनंकरिष्ये इतिसंकल्प्य वृताचार्योवटमूलेगृ
धाय तत्रसर्वतोभद्रंविरच्य तत्रब्रह्मादिदेवताःसंपूज्य तत्रकलशद्वयंप्रतिष्ठाप्य तत्रैकस्मिन्कलशेहेमंब्रम्हजज्ञानमिति
मंत्रेणब्रह्माणंगायत्रीमंत्रेणहेमींसावित्रींच प्रतिष्ठाप्य तदुत्तरद्वितीयकुंभेपलादधिकरजतस्यराजतपर्यंकेहैमीः सत्यवत्सावित्रीयमनारदप्र
तिमाः नाममंत्रैरावाह्य पुरतःकाष्ठभारंकुठारंच हैमंराजतंवानिधायपूजयेत् अशक्तावेकस्मिन्कलशेसर्वेषांपूजनं पुष्पोत्तरमंगपूजा
सावित्र्यैनमः पादौपूजयामि प्रसावित्र्यै॰ जानुनीपू॰ कमलपत्राक्ष्यै॰ कटींपू॰ भूतधारिण्यै॰ उदरंपू॰ गायत्र्यै॰ कंठंपूज॰ ब्र
शिरःपू॰ अथब्रह्मसत्यव्रतोः धात्रेपादौ॰ परमेष्ठिने॰ जानुनी॰ अग्निरूपाय॰ कटीं॰ वेधसे॰ उदरं॰ हिरण्यगर्भा॰ कंठं॰ ॰सु-

ब्रह्मणे॰शिरःपू॰ मंत्रपुष्पानंतरमर्घ्यंदद्यात् रजतादिपात्रेणद्वयोरपि ॐकारपूर्वकेदेवि वीणापुस्तकधारिणि वेदमातर्नमस्तुभ्यं मवै ध-
यच्छमे पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंच गृहाणार्घ्यंनमोस्तुते अथब्र-
ह्मसत्यवतोः त्वयादृष्टंजगत्सर्वंसदेवासुरमानुषं सत्यव्रतधरोदेवब्रम्हरूपनमोस्तुते अथयमाय त्वंकर्मसाक्षीलोकानांशुभाशुभविवेक
वैवस्वतगृहाणार्घ्यंधर्मराजनमोस्तुते नारदाय नारदायनमस्तुभ्यंस्करेशाद्यभिवंदित गृहाणार्घ्यंमयादत्तमवैधव्यंप्रयच्छमे ततःप्रा-
र्थयेत् सावित्रीब्रम्हगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसंसारसागरात् मयाकृतंमहाघोरंजन्मांतरशतैरपि भस्मीभ
वतुतत्सर्वमवैधव्यंचदेहिमे ब्रह्मसत्यव्रतोः अवियोगोयथादेवसावित्र्यासहितस्यते अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि सावित्र्याः
सावित्रीत्वंयथादेवीचतुर्वर्षशतायुषा पतिंप्रासासिसुणिनंममदेवितथाकुरु यमस्य कर्मसाक्षीजगत्पूज्यसर्वंवंप्रसीदमे संवत्सरंव्रतं
सर्वपरिपूर्णंतदस्तुमे ततःसुवासिनीःसंपूज्यवायनानिदत्वा कथाश्रवणादिनारात्रिंनिनयेत् प्रातरभिप्रतिष्ठाप्य अन्वादध्यात् सावित्री
गायत्रीमंत्रेणपायसघृतदूर्वातिलव्रीहिद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रम्हाणंधर्मराजंनारदंच व्याहृतिमंत्रेणतिलव्रीहिय
वद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रम्हादिदेवतानांचैकैकयाज्याहुत्यायक्ष्ये सत्यवत्सावित्र्योर्ब्रह्मसावित्र्योरेकस्थाने
पृथक्होमादिकंनास्ति पूजादौतत्तन्मंत्राभ्यामेतयोः पूजेत्युक्तत्वात् एवंहोमंसंपाद्य ततश्चतुर्विंशतिर्द्वादश वाचत्वारिवा-
मिथुनानिवस्त्रादिनासंपूज्य पूरिकामोदकमंडकादियुतं कूष्मांडनारिकेलमातुलिंगदाडिमबीजपूरादिफलयुतंहरिद्राकुंकुमकेशविचूर्णि

काकज्जलकंठसूत्रकंकणमौक्तिकपादभूषणवस्त्रकंचुक्यादर्शांजनपात्रदक्षिणातांबूलादियुतंच शूर्पविहितंवायनंदद्यात् तत्रमंत्रः सोप-
स्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकं वायनंतेप्रयच्छामि सावित्रीप्रीयतामिति ततः पीठंव्रतपूर्तयेगांचदत्वाब्राह्मणान्संतर्प्य आशिषोगृहीत्वा
-जीतद्दयानत्रविशेषः रात्रावरुंधतींदृष्ट्वासंपूज्यार्घ्यंदद्यात् अरुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे पुत्रान्देहिस्वरवंदेहिगृह्या-
इतिवटसावित्रीव्रतम् अथद्वात्रिंशत्पौर्णमासीव्रतम् भाषयाबत्तिशीपौर्णमासीत्युच्यते तदुक्तंभवि-
शीर्षस्यतस्यांप्रारभ्यतेव्रतम् उमयासहितोदेवः पूजनीयोमहेश्वरः एकैकंदीपकंकृत्वामासिमासिचदापयेत् ए
द्व इमासाधेकमाचरेत् नभसः पूर्णिमायांचकुर्यादुद्यापनंततः अथवाशुभमासस्यपूर्णिमायांसमापयेत् चतुर्दश्यामुपवसेत् रा
पूजनमारभेत् तिथ्यादिसंकीर्त्य आत्मनःइहजन्मनिजन्मांतरेच वैधव्यनाशनपुत्रपौत्रादिसौभाग्यप्राप्तिपूर्वकभर्तुरायुर्वृद्धिद्वाराउ-
मामहेश्वरप्रीत्यर्थंआचरितस्यद्वात्रिंशत्पौर्णिमासीव्रतस्यपूर्णतासिद्ध्यर्थंउद्यापनाख्यंकर्मकरिष्ये वृताचार्यः लिंगतोभद्रस्थकलशेहैमंउ-
मामहेशं ॐ नमःशिवायेतिमंत्रेणस्थापयेत्पूजयेच्च प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् उमामहेशंयवतिलाज्यद्रव्यैः प्रत्येकमष्टोत्तरशत-
संख्याकाहुतिभिः ब्रम्हादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततोग्नीत्युपरिस्थद्वात्रिंशद्धनयुतवंशपात्रेद्वात्रिंशन्महादीपान् द्वात्रिंशत्फलवस्त्र
णायुतान्कृत्वादद्यात् तत्रमंत्रः महेशःप्रतिगृह्णातिमहेशोवैददातिच महेशस्तारकोस्माकंमहेशायनमोनमः द्वात्रिंशद्भिः
फलैर्दीपैःसंयुतंवस्त्रवेष्टितं वाणकंतवतुष्ट्यर्थंददामिगिरिजापते ततोद्वात्रिंशद्ब्राह्मणान्सदन्नेनसंतर्प्य आशिषोगृहीत्वास्वयंभुंजीत

इति द्वात्रिंशत्पूर्णिमाव्रतम्    अथ कोकिलाव्रतम्    तदुक्तं भविष्ये    यस्मिन्वर्षे आषाढद्वयं तदा शुद्धाषाढपूर्णिमायां व्रतग्रहणम्
श्रावणपूर्णिमायां समापनं    अशक्तेन दिनाष्टकं त्रिदिनं वा कार्यम्    तत्र विधिः    दिनाष्टकं हरिद्राकुंकुमलेपनपूर्वकं ततस्तिलामलकैः त-
तः सर्वौषधिभिस्ततो वचापिष्टेन ततः स्नानमंत्रेण    स्नास्येहं परया भक्त्या समुद्दिश्य कुरूपतः    सौभाग्यं सुंदरं रूपं कुरु जन्म निजन्म-
नि    ततः स्नात्वा सूर्यायार्घ्यं दत्वा गृहे पूजां कुर्यात्    तद्यथा    ममेह जन्मनि जन्मांतरे च सर्वपापक्षयपूर्वकं पुत्रपौत्राद्यवैधव्यनिःसाप-
त्न्यलक्ष्मीसौभाग्यरूपलावण्याद्यभिवृद्धिद्वारा कोकिलारूपा गौरी प्रीत्यर्थं कोकिलाव्रतं करिष्ये    इति संकल्प्य    कोकिलां पूजयेत्
तद्यथा    सौवर्णीं रौप्यपादां मौक्तिकनेत्रां प्रवालमुखीं पंचरत्नपृष्ठीं राजतचूतवृक्षस्थां पक्षिरूपिणीं कोकिलां कृत्वा तिलपूरितताम्रपात्रे नि-
धाय पूजयेत्    अशक्तौ तिलपिष्टमयीं कुर्यात्    तस्याः प्रत्यहं विसर्जनम्    धातुमय्या विकल्पः    चूतचंपकवृक्षस्थां स्वर्णपक्षां द्विजसंयु-
ताम्    चिंतयेत्पार्वतीं देवीं कोकिलारूपधारिणीम्    इति ध्यात्वा    श्रीसूक्तेन गौरीमिमाय इति मंत्रेण नाममंत्रेण वा पूजयेत्    तिलस्नेहे
तिलमुखे तिलसौख्ये तिलप्रिये    सौभाग्यधनपुत्रांश्च देहि मे कोकिले नमः    इत्यर्घ्यं    पुष्पोत्तरमंगपूजा    शिवायै नमः शिरः पूजयामि
वनवासिन्यै नमः ललाटं पूजयामि सुरूपा० नेत्रं पू० पार्वत्यै० चंचुं पू० तिर्यग्रूपधारिण्यै० कंठं पू० कोकिलायै० हृदयं पू० पक्षि
रूपिण्यै० गुल्फं पू० पद्मवक्त्रायै० पादौ पू० कृष्णवर्णायै नमः सर्वांगं पू०    कोकिले कृष्णवर्णा त्वं सदा वससि कानने    भवान्यै हरकांतायै कोकिला
यै नमो नमः    इति नमस्कारः    पुनरर्घ्यं    अर्घ्यं गृहाण देवेशि वांछितार्थप्रदायिनि    आषाढस्यासिते पक्षे मेघवर्णे हरिप्रिये    कोकिले त्वं जग

हिमेसदा पुत्रान्देहि धनंदेहि सर्वान्कामान्कुरुष्वमे काकवंध्याविवत्साच
न्मातर्गृहाणार्घ्यंनमोस्तुते ततःप्रार्थयेत् रूपंदेहिजयंदेहिसौभाग्यंदेहिमेसदा पुत्रान्देहि धनंदेहि सर्वान्कामान्कुरुष्वमे काकवंध्याविवत्साच
तास्तुवैफल्यतांयांतुकोकिलेत्वत्प्रसादतः त्वयालब्धःपतिर्लोके शंकरोलोकशंकरः अतोहंत्वत्प्रसादेनलभेयंपतिमुत्तमम्
६ . ।यनंदद्यात् देव्यैतिलगुडमिश्रितपक्वान्ननैवेद्यं प्रदोषकालेपूजने स्वयंतिलगुडभक्षणंहविष्याशनंवाततोविसर्जनम्
पश्चैत्ररथोत्पन्नेविंध्यपर्वतवासिनि अर्चितापूजितासित्वंकोकिलेहरवल्लभे कोकिलेकलकंठासिमाधवेमधुरस्वरे वसंतेवससेदेविगच्छ-
त्वंनं नंवनं इतिमंत्रेणविसर्जनं एवंमासपर्यंतंचरित्वांते पूर्णिमायामुद्यापनंकुर्यात् तद्यथा पूर्वोक्तंसंकल्पंकृत्वा आचरितकोकिलाव्रतसां
कोकिलारूपिणीगौरीप्रीत्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये वृताचार्यः एकलिंगोद्भवेभद्रेब्रह्मादिदेवताःसंस्थाप्य तदुपरिप्र-
२ धान्योपरिताम्रंकृष्णवस्त्रवेष्टितंकलशंप्रतिष्ठाप्य तदुपरिएकविंशतिबंधात्मकंतिलपूर्णवंशपात्रंनिधायतत्रपूर्वो
क्तलक्षणांहेमींकोकिलांगौरीमिमामेतिमंत्रेणप्रतिष्ठाप्य पूर्वोक्तप्रकारेणपूजयेत् अशक्तस्तुमासपर्यंतंपूजितामेवाधिवासये
रात्रौजागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं कोकिलारूपिणींगौरींगौरीर्मिमायेतिमंत्रेणतिलचंपकपु-
: प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः तथाव्याहृतिमंत्रेणबिल्वपत्रैः शतत्रयपरिमिताहुतिभिः
श्चैकैकयाज्याहुत्यायक्ष्ये एवंहोमंसंपाद्य पंचमिथुनानिसंपूजयेत् अशक्तोद्वयंतेभ्योगुडतिलमिश्रितपक्वान्नपूरितकरकयुतंसो ४४
भाग्यद्रव्यदक्षिणान्वितंवंशपात्रस्थकृष्णोर्णावस्त्रवेष्टितंवायनंदद्यात् तत्रमंत्रः सोपस्कंरंद्विजश्रेष्ठवायनंव्रतपूर्तये ददामितेगृहाणेदं-

कौकिलाप्रीयतामिति ततःपीठंव्रतपूर्तयेगांच दत्वा ब्राम्हणान्वस्त्रादिभिः प्रतोष्य आशिषोगृहीत्वास्वयंभुंजीत इतिकोकिलाव्रतम् अथभा
द्रपदपूर्णिमायां उमामहेश्वरव्रतम् शिवरहस्ये तत्रपूर्वेद्युःसांबशिवंसंपूज्य हविष्याशीशिवध्यानपरोदेवसन्निधौनिद्रांकुर्यात् प्रातर्न-
द्यादौस्नात्वा नित्यकर्मनिर्वर्त्यभस्मोद्धूलितसर्वांगोदेवागारंप्रविश्य तिथ्यादिसंकीर्त्य आत्मनोशेषपापक्षयदुःखदारिद्र्यनाशपूर्वकशिवपदप्रा
प्तिकामनया उमामहेश्वरव्रतंकरिष्ये इतिसंकल्प्य चतुर्द्वारिपशोभितमंडपे भद्रपीठे कलशंप्रतिष्ठाप्य तत्रपूर्णपात्रेप्रतिग्रंथिकुशांगव्यांक्तंकुं
कुमांकितंपंचदशग्रंथियुतंदोरकं निधाय तत्रसौवर्णराजतंवा पलादधिकंप्रतिमाद्वयं उमामहेश्वरयोः त्र्यंबकंगौरीर्मिमायेति मंत्राभ्यांप्रति-
ष्ठाप्य विध्युक्तप्रकारेणपूजयेत् अथध्यानं पंचाननमुमाकांतमनलेंदुरविप्रभं चंद्रार्धशेखरंनित्यंजटामुकुटमंडितम् भस्मोद्धूलि
तसर्वांगंरुद्राक्षाभरणान्वितम् ऋतंसत्यंपरंब्रह्मविष्णुब्रम्हादिवंदितं विश्वंविश्वेश्वरंदेवंध्यायामिपरमेश्वरं ध्यायामिपरमांगौरीमां-
दिविधांसुरेश्वरीम् लक्ष्मीसेवितपादाब्जां चंद्रार्धकृतशेखराम् ब्रम्हेंद्रोपेंद्रजननीमहेशार्द्धांगभागिनीम् प्रसन्नवदनांशांतां ध्यायेद्देवीं
सुमांसलीम् एवंध्यात्वापंचब्रह्ममंत्रैः षोडशोपचारैःपूजयेत् पुष्पांतरंअंगपूजा कपर्दिनेनमः कपर्दंपूजयामि भाललोचनाय० भालंपू० सोम
सूर्याग्निलोचनाय० नेत्राणि० श्रुतिश्रोत्राय० श्रोत्राणि० प्राणाधाय० घ्राणानि० स्मृतिदंताय० दंतान्० श्रुतिजिव्हाय० जिव्हां० भीमाय० कपो
लौ० शर्वाय० ओष्ठौ० नीलकंठाय० कंठं० भूरिवक्षसे० वक्षः० हिरण्यबाहवे० बाहून्० विश्वोदराय० उदरं० रुद्राय० कटीं० पशुपतये० जा
नुनी० उग्राय० गुल्फौ० महते० पादौ० शिवाय० सर्वांगं० पृथुवेण्यै० वेणीं० सीमंतराजितायै० सीमंतं० नीलकुंतलायै० कपोलौ० कुड्मलदंतायै०

ग्र· दंतान्° विद्याजिव्हायै° जिव्हां° बिंबोष्ठ्यै° ओष्ठौ° कंबुकंठ्यै° कंठं° पृथुलकुचायै° कुचौ° विश्वगर्भायै° उदरं° रंभकट्यै° कटी° दिव्यो-
४५ रुदेशायै° ऊरू° °जंघे° लक्ष्मीसेवितपादुकायै° पादौ° महेश्वरप्रियायै° नखान्° शोभनविग्रहायै° सर्वांगं पू° एवं पूजां समाप्य
: उमामहेश्वरौ निमंत्रयेत् प्रत्येकं क्रमेण संपूज्य पंचदश ग्रंथिषु गोधूमांस्तंडुलान्वा निदध्यात्
ततो दोरकधारणम् धूमापूपानां वायनं मंडकानां वा पात्रे पंचदश मंडकान् संस्थाप्य सदक्षिणं वायनं दद्यात् तत्र मंत्रः उमेशः
प्रतिगृह्णाति उमेशो वै ददाति च उमेशस्तारकोऽस्माकं उमेशाय नमो नमः ततः पीठं दत्त्वा सदन्नेन शैवान् ब्राह्मणान्संतर्प्य वाग्यतः स्वयं भुजीत एवं प्र
वर्षं प्रतिसंवत्सरं चरित्वांते उद्यापनं कुर्यात् पूर्वोक्तफलावाप्तये आचरितोमामहेश्वरव्रतपूर्तये तदुद्यापनं करिष्ये ततः पंचदश शैवान्
द्विजानभिमंत्र्य देवीं स्थापयेत् व्रताचार्यः लिंगतोभद्रे पंचदश पीठेषु पंचदश कुंभान् वस्त्रयुग्मवेष्टितान् कृत्वा पुराणपठनादिना रात्रिं नि
नयेत् :~५९ : अग्निप्रतिष्ठाप्यान्वाद्ध्यात् उमामहेशं घृताक्तपायसद्रव्येण पंचदशसहस्रं पंचदशशतानि वा
१: हुत्वा यक्ष्ये होममंत्रः उमामहेश्वरायनमः स्वाहेति वैदोक्त्या वा ततो द्विजान् वस्त्रादिना संपू
ज्य ९ गास्तन्मौल्यं वा दत्त्वा अन्यान्द्विजान् सुवासिनीश्च संपूज्य देवं प्रार्थयेत् उद्यापनं कृतं शंभो म-
१९९ मंत्रहीनं भक्तिहीनं शक्तिहीनं च यत्कृतं सांगं भवतु तत्सर्वं तव वस्मरणात्प्रभो ततः ४५
वाग्यत इष्टजनैः सह भुंजीत अथाश्विनपूर्णिमायां कोजागरव्रतम् स्कांदे तिथ्यादि संकीर्त्य ।

नःस्वकुलस्यचारवंड लक्ष्मीप्राप्तिपूर्वकसुखादिप्राप्तयेलक्ष्मीप्रीत्यर्थंकोजागरव्रतंकरिष्ये रात्रौमंडलेसक्तुभिर्वनितउनेतिमंत्रेणलक्ष्मीं० इंद्रंनरो-
नेतिमंत्रेण मत्तैरावतस्थमिंद्रमावाह्यपूजयेत् परितोदीपान् घृतेनतैलेनवा लक्ष तदर्धंतदर्धंवायथाशक्तिवादत्वावीथीचतुष्पथेवाद-
त्वानारिकेलोदकमात्रंप्राश्याक्षैर्दीव्यन्नुत्सवेनरात्रिंनिनयेत् प्रातर्घृतशर्करापायसाद्यिनाब्राह्मणान्संतर्प्यदक्षिणांदत्वाऽशिषोगृहीत्वाइष्टजनैःसहभुं-
जीत इतिकोजागरव्रतम् अथकार्तिकशुक्लचतुर्दश्यांपौर्णमास्यांवाकूष्मांडीव्रतम् भविष्ये अन्यस्मिन्शुभमासेवाकार्यम् तत्रव्रतविधिः वैशा-
खसितचतुर्दश्यांशुभदेशेकूष्मांडीरोपणं षण्मासावधिषण्नाममंत्रैःप्रत्यहंक्रमात्पूजयेत् सौभाग्यदायिन्यै० १ सर्वकामदायै० २ पुत्रदायै० ३ धनदायै०
४ अभीष्टफलदायै० ५ मोक्षदायै० ६ एवंषण्मासंसंपूज्य फलादियुतायांसत्यांउद्यापनंकुर्यात् उद्यापनदिनेवाक्रमात् षण्मासिकपूजा आदौका-
र्या तिथ्यादिसंकीर्त्य आत्मनः सत्पुत्रप्राप्तिपूर्वकं अतुललक्ष्मीसुखाभिवृद्धिद्वारा ब्रम्हसावित्रीप्रीत्यर्थंकूष्मांडीव्रतोद्यापनंकरिष्ये ततोवृता-
चार्यः कुष्मांडीपरितोमंडपंविरच्यपताकादिभिर्भूषयित्वा तन्मूलेहैमींपुष्पफलादियुतांकुष्मांडीसंस्थाप्य अभ्यंगस्नानंकृत्वाभूषणैर्भूषयित्वापूज-
येत् तत्पुरतःसर्वतोभद्रेब्रम्हादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्य तत्रहैमप्रतिमयोर्ब्रम्हसावित्र्योब्रम्हजज्ञानंप्रणोदेवीतिमंत्राभ्यांप्रतिष्ठाप्यपू-
जयेत् कूष्मांडीपूजनमंत्र. कूष्मांड्यैकामदायिन्यैब्रम्हाण्येतेनमोनमः नमोस्तुसुखदात्र्यैचसावित्र्यैतेनमोनमः रात्रौजागरणंकृत्वाप्रातरग्निं
प्रतिष्ठाप्यान्वादध्यात् ब्रम्हाणंसावित्रींचघृततिलद्रव्येण प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैक याज्याहुत्यायक्ष्ये स्थापनमं-
त्राभ्यांहोमः ततोष्टौचत्वारिवामिथुनानिवस्त्रादिनासंपूज्य फलसौभाग्यद्रव्ययुतंवायनंतेभ्योदत्वासपत्नीकंब्राम्हणंसंपूज्यकूष्मांडींदद्यात्

व्र॰ नत्रमंत्रः . . . . . भूषिताम् दक्षिणाकलशोपेतांहैमकूष्मांडिसंयुताम् सावित्रीब्रम्हसंप्रीत्यैगृहाणद्विजस कौ॰
४६ नम : १ इतिकूष्मांडीव्रतम् अथकार्तिक पूर्णिमायां सौभाग्यव्रतम् विष्णुधर्मोत्तरे
ततःतिथ्यादिसंकीर्त्य ममेहजन्मनिअखंडितसुखसौभाग्य धनधान्यलक्ष्मी भर्तृपुत्रायुर्वृ-
द्धिद्वाराश्रीपरमे । भाग्यव्रतंकरिष्ये भूमौकेशरादिसुगंधिद्रव्ययुतगंधेनषोडशपत्रात्मकं पद्मंविरच्यतत्रदेवताआवाहयेत्
येलक्ष्मीनारायणं केशरेसमविंशतिनक्षत्राणिपूर्वादिक्रमपत्रेषु अग्निं॰ ब्रम्हाणं॰ अंबिका॰ गणपतिं॰नागं॰ स्कंदं॰ विरोचनं॰
॰दुर्गां॰ यमं॰ इंद्रं॰ ॰कामेशं॰ शिवं॰ ॰पितरंच॰१६ सप्तऋषीन् एताःदेवताः संस्थाप्यसंपूज्य मोदकमंडकपायसैर्दध्नाअपू
वस्त्र स्वयंउपवासीभोजनंवाकार्यम् सौभाग्यदंरूपविवर्द्धनंचलावण्यदंस्त्रीरतिभोगदं-
: १९ इतिसौभाग्यवृद्धिकरव्रतम् अथमहाफलव्रतम् कार्तिकशुक्लप्रतिपद्मारभ्य
ारवशुक्लतृतीयायांआश्विनशुक्लेवारभेत् दंतधावनपूर्वकंदशस्नानविधिपुरःसरंनद्यादौस्नात्वापंचगव्यंप्राश्य तिथ्यादिसं
१ : २ काममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंमहाफलव्रतंकरिष्ये विष्णुंविधिपुरःसरंसंपूज्यद्वादश
अष्टोत्तरशतसहस्रंजप्त्वा प्रतिपदिक्षीराशनः सप्तम्यां अष्टम्यांनवम्यां पिष्टाशीदशम्यां हविष्याशी एकादश्यांउपवासः द्वादश्यांघृता- ४६
यांपौर्णिमास्यांकुशोदकप्राशनं एवंप्राशनविधिः अनेनविधिनापक्षमेकंयोवर्तते अश्वमेधफलं प्राप्नोति मासपर्यंतं मन्वंतरयावत्स्व

गेंवसति मासचतुष्टयेतुराजसूयाच्छतगुणंफलमाप्नोति संवत्सरमाचरणे सवितुर्लोकेऽनंतकालं प्रतिवसतियती ब्रम्हचारी गृहस्थोवानप्रस्थ. सौभा-
तीविधवावानारीनरोवा शुचिः प्रयतमानसः कुर्वन् सूर्यलोके कोटिवर्षाणिवसतीति इति भविष्यपुराणोक्तंमहाफलव्रतम् अथविष्णुधर्मोक्तं
अशोकपूर्णिमाव्रतं फाल्गुनशुक्लपूर्णिमामारभ्य तिथ्याद्युल्लिख्य नद्यादौविधिवत्स्नात्वानित्यकर्मनिर्वर्त्यममेहजन्मनि अखिलशोकापच्छांतिपूर्वकंस
गनिवृत्तिद्वारा अखंडैश्वर्यसौभाग्यपुत्रपौत्राद्यभिवृद्ध्यर्थं अशोकपूर्णिमाव्रतं करिष्ये इतिसंकल्प्यस्नात्वा मस्तकाद्यंगेषुमृत्तिकांलेपयित्वा पुनः
त्वाभूमौस्थंडिलंविरच्य मध्ये भूमिरूपां धरणीनाम्नींदेवतां ध्यात्वा पूजयेत्प्रार्थयेच्च यथाविशोककृद्देवितवास्तिहिजनार्दनः तथामांसर्वलोके-
भ्योविशोकांकुरुमेदिनि यथासमस्तभूतानामाधारेणव्यवस्थिता तथाविशोकांकुरुमांयुक्तांचकुरुभूतिभिः त्वयाध्यातोयथाविष्णुः स्वास्थ्यंत
वचकारह तथाध्यानावांछितंमेकुरुत्वंभूतधारिणि ततश्चंद्रायार्घ्यंदद्यात् क्षीरोदार्णवेतिमंत्रेण उपोषणंनक्तंहविष्याशनंवाकुर्यात् प्रातःद्विजदंप
तीभ्यांवायनंदक्षिणांचदत्वा सदन्नेनसंतर्प्य स्वयंपारणंकुर्यात् एवंप्रकारेण फाल्गुनादिमासचतुष्टयंकृत्वा पुनराषाढादिमासचतुष्टयेपि पूर्ववत्
स्नानंपूजामुपोषणादिकंकृत्वा रात्रौजागरणंकुर्यात् पुनरपिकार्तिकादिमासचतुष्टयेस्नानादिकंपूर्ववत्कुर्यात् प्रथममासचतुष्टये धरणीनाम्नीदे
वताद्वितीये मेदिनीतृतीयेवसुंधरेति वत्सरांतेद्विजायसवत्सांगांवस्त्रालंकारयुतांदद्यात् व्रतेनानेनसंतुष्टा धरणीत्वंशुचिव्रते सर्वबाधाप्रशमनं
शोकनाशंचमेकुरु इतिअशोकपूर्णिमाव्रतं अथद्वादशपूर्णिमाव्रतं विष्णुधर्मे नियमपूर्वकंस्नात्वा तिथ्यादिसंकीर्त्य ममेहजन्म
नजन्मांतरेवा भर्त्रासह धर्मार्थकाममोक्षसिद्धिद्वारा श्रीमहाविष्णुप्रीत्यर्थंद्वादशपूर्णिमाव्रतं करिष्ये कृतोपवासः मध्यान्हे अपराण्हेवा

विष्णुं विभवानुसारेण संपूज्य . चंद्रायार्घ्यं दत्वा द्वादशाक्षरमंत्रं जस्वा प्रार्थयेत् श्रीर्निशीबंधुरूपस्त्वं वासुदेव जगत्पते मनोभिलषितं देव पूर
यस्व नमो नमः ततः ब्राह्मणाय उदकुंभं वस्त्रद्वयं उपानह छत्र दक्षिणासहितं दद्यात् रात्रिं जागरणादिभिर्निनयेत् प्रातः सदन्नेन ब्राह्मणैः सह
भुंजीत एवं प्रकारांतरेण प्रतिमासं कृत्वा पृथक् पृथक् मासनामानि॰ केशव॰ नारायण॰ माधव॰ गोविंद॰ विष्णो॰ मधुसूदन॰ त्रिविक्र
म॰ वामन॰ श्रीधर॰ हृषीकेश॰ पद्मनाभ॰ दामोदर॰ एवं द्वादशक्रमेण पूजयेत् संवत्सरस्यांते हिरण्मयं चंद्रं कृत्वा पूजयेत् फलवस्त्र
हितं ब्राह्मणाय दत्वा व्रतपूर्तये शुक्लां गां दक्षिणासहितां दद्यात् सदन्नेन विप्रदंपतीभ्यां सह भुंजीत इति द्वादश पूर्णिमाव्रतम् इति श्री चि॰ व्रतो
द्यापनकौमुद्यां पूर्णिमाव्रतानि अथामावास्याव्रतानि अथ मार्गशीर्षामावास्यायां गौरीतपोव्रतम् कालिकापुराणे तत्रविधिः इदं व्रतं
शवर्षात्मकं अशक्तौ षोडशमासात्मकं तत्र प्रथमेऽब्दे चतुर्दश्यां नक्तं अमायामुपोषणं पूजनं च प्रतिपदि पारणा अत्र वर्षवृद्धौ तिथिवृ
६ यामाचरेत् प्रदर्शनार्थं लिख्यंते द्वितीयेऽब्दे अमावास्यायां नक्तं प्रतिपदि उपोषणं द्वितीयायां पारणं एवं सर्वत्र ज्ञेयं
तिश मतुल सौभाग्यादि वृद्धि द्वारा गौरीप्रीत्यर्थं गौरीतपोव्रतं करिष्ये इति संकल्प्य सूर्यायार्घ्यं
इति मंत्रेण गौरीमावाह्य दक्षिणोत्तरतः गणेशं स्कंदं चावाह्य पंचामृतपुरःसरं षोड
अंगपूजा पार्वत्यै न॰ पादौ पू॰ ॰ जानुनी पू॰ गिरिजायै॰ गुह्यं॰ गंभीरायै॰ नाभिं॰ अपर्णायै॰ उदरं॰ कामिन्यै॰ कंठं
॰ मुखं॰ लोकमोहिन्यै नमः ललाटं॰ गौर्यै॰ शिरः ततः ताम्रपात्रे षड्दले तंतुमयीं वर्तीं निधाय सूर्योदयावधि गोघृतेन दीपमुज्ज्वालयेत् एवं क-
१ रात्रिः

थाश्रवणादिनारात्रिंनीत्वा ब्राम्हेमुहूर्तेउत्थायस्नात्वा गौरींसंपूज्य फलपूरिकातिलतंडुलसौभाग्याष्टकयुत धातुमये पात्रे दीपनिधायतिथिना
मभिर्भ्रामयेत् ततःसूर्यायदर्शयेत् यावत्पक्ष्यादीनांशब्दादिकंनास्तितावत्पूर्वमेवदीपभ्रमणादिकंकर्तव्यं ततःप्रातर्दंपतीसंभोज्य गौरींधि-
ष्ण्य स्वयमक्षारंभुंजीत वृषे ह्न्नौदंपतीवृद्धिः एवंषोडशवर्षंकृत्वांते उद्यापनंकुर्यात् मार्गशीर्षपौर्णमास्यांपूर्ववत्संकल्पं कृत्वा ततोहृतान्वा
: पीठेहैमींगौरीं गौरीर्मिमायेतिमंत्रेणईश्वरंच थेषामीशेपशुपतिरितिमंत्रेण आवाह्यपूर्ववत्सर्वंकुर्यात् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् गौ-
श्वरंच घृततिलद्रव्येणप्रत्येकमष्टोत्तरसहस्रसंख्याकाहुतिभिः ब्रम्हादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततःषोडशदंपतीः वस्त्रादिनासंपू-
र्करापूपमोदकपूरितान् धातुमयान्मृन्मयान्वाकरकान्सदक्षिणास्तेभ्योदद्यात् तत्रमंत्रः मोदकाद्यैश्चसंपूर्णंव्रतसंपूर्तिकारकं करकंते प्र-
च्छामि गौरीमेप्रीयतामिति ततःपीठंव्रतपूर्तयेगांचदत्वाऽशिषोगृहीत्वाभुंजीत इतिगौरीतपोव्रतम् अथपौषमाघामावास्यायांअर्धोदयव्रत-
म् स्कांदे अर्धोदयस्वरूपंभारते अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः अर्धोदयःसविज्ञेयः कोटिसूर्यग्रहैःसमइति दिवैवयोगः शस्तो
नतुरात्रौकदाचनेति तिथ्यादिसंकीर्त्यात्मनः अखिलपापक्षयपूर्वकंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराब्रम्हविष्णुशिवप्रीत्य-
र्थंअर्धोदयव्रतमहंकरिष्ये इतिसंकल्प्य दर्भास्तृतशुद्धभूमौशतत्रयद्रोणपरिमिततिलानांपर्वतंकृत्वायथाशक्तिवातत्रपलाधिकंसुवर्णस्यब्रम्ह-
विष्णुशिवानांप्रतिमात्रयंकृत्वा ब्रम्हजज्ञानमिदंविष्णुस्त्र्यंबकमितिमंत्रैः प्रतिष्ठाप्यपूजयेत् पतिलोकेशांस्तत्तन्मंत्रैर्वावाहयेत् पूजयेच्च अ-
थांगपूजाक्रमेण ब्रम्हणे० पादौ० हिरण्यगर्भाय० ऊरू० परमेष्ठिने० जंघे० वेधसे० गुल्फे० हंसवाहनाय० कटीं० शतानंदाय० वक्षःपू० सनाविन्याप-

नये० बाहू० पूर्वादिचतुर्मुखेषु ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० चतुर्वक्त्राय० नेत्रे० कपिलाय० ललाटं० हंसाय० शिरःपू० अ-
थविष्णोः अनंताय० पादौ० विश्वरूपाय० ऊरू० मुकुंदाय० जानुनी० गोविंदाय० जंघे० प्रद्युम्नाय० गुह्यं० पद्मनाभाय० नाभिं० कौस्तुभवक्षसेन०
वक्षःपू० चतुर्भुजाय० बाहू० विश्वतोमुखाय० मुखं० सहस्रशिरसे० शिरःपू० अथशिवस्य० ईशानाय० पादौ० चंद्रशेखराय० जंघे० पशुपतये०
० शंकराय० ऊरू० उमाकांताय० गुह्यं० नीललोहिताय० नाभिं० कृत्तिवाससे० उदरं० नागोपवीतिने० बाहू० नीलकंठाय० कंठं० पंचवक्त्राय०
मुखं० कपर्दिने० शिरःपू० क्रमेणप्रार्थयेत् नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने देवायदेवपतयेयज्ञानांपतयेनमः नारायणजगन्नाथनमस्तेग
रुडध्वज पीतांबरनमस्तुभ्यंजनार्दननमोस्तुते महेश्वरमहेशाननमस्तेत्रिपुरांतक जीमूतकेशायनमोनमस्तेवृषभध्वज ब्रम्हविष्णुमहेशानाः
कर्मणांफलहेतवः भक्त्यामयाकृतांपूजांगृण्हीध्वंजगदीश्वराः ततःसपत्नीकंवेदशास्त्रविदंब्राम्हणंवृत्वा वस्त्रालंकरणादिभिःसंपू
ज्य पुनर्ब्रह्मविष्णुमहेशान् पंचामृतपुरःसरंकमलतुलसीबिल्वदलैःसंपूजयेत् ततोहुतान्वार्यः अग्निंप्रतिष्ठाप्यअन्वादध्यात् ब्रह्मवि-
ष्णुमहेशान्प्रत्येकं तिलद्रव्येणप्रतिदैवतंसहस्रसंख्याकाहुतिभिः लोकपालानेकैकयाज्याहुत्यायक्ष्ये ततःतिलपर्वतंप्रतिमात्रययुतंब्रा-
ह्मणायदद्यात् तत्रमंत्रः तिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्वराः दहंतुपातकंसर्वंयच्छंतुममसद्गतिं इत्युक्त्वादद्यात् ततःसांगतासिद्ध्य-
र्थं कृष्णश्वेतवर्णसुरभित्रयंसोपस्करंदद्यात् भविष्येप्रकारांतरेणहोमद्रव्याण्युक्तानि पलाशसमिच्चरुतिलाज्यानि ब्रम्हणः अश्वत्थसमित्ति-
लपायसानिविष्णोःचर्वाज्यव्रीहयः शंभोः घृतेनपायसेनवापूरितंकांस्यपात्रंसदक्षिणंदद्यात् ततोभूयसींदत्वा आशिषोगृहीत्वाब्राह्मणैः

सह भुंजीत इतिअर्धोदयव्रतम् अथसोमवत्यमावास्याव्रतम् भविष्येतत्र शंखः अमावास्यातु सोमेन सप्तमी भानुनासह चतुर्थी भूमि पुत्रेण सोम
पुत्रेणचाष्टमी चतस्त्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभाइति तिथ्यादिसंकीर्त्य आत्मनः अवैधव्यपुत्रपौत्र प्राप्तिपूर्वक मतुलसौभाग्यसिद्धिद्वारा-
श्वत्थरूपीनारायणप्रीत्यर्थं आचरितस्य सोमवत्यमावास्याव्रतस्य सांगतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्ये इतिसंकल्प्य वृताचार्यः सर्वतोभद्रस्थ
कलशेरौप्यमयपीठेसौवर्णाश्वत्था धोहैमंलक्ष्मीनारायणंइदंविष्णुरितिमन्त्रेणप्रतिष्ठाप्य पूजयेत् मूलतोब्रम्हरूपायेति पुरुषसूक्तेनवा पूजयेत्
कथाश्रवणादिनारात्रिंनिनयेत् प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात् लक्ष्मीनारायणमश्वत्थसमित्पायस तिलद्रव्येण प्रत्येकमष्टोत्तरशत संख्याकाहुतिभिः ब्र
ह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततो द्वादशब्राम्हणान्वस्त्रादिना संपूज्य लड्डुकपाय सघृतमंडकादि पक्वान्नैः संतर्प्य आशिषोगृहीत्वास्वयं भुंजी-
त इतिसोमवत्यमावास्याव्रतम् अथमलमासव्रतम् पाद्मे मलमासस्यकृष्णपक्षेचतुर्दश्यांत्रयोदश्यांवा अष्टम्यांनवम्यांतृतीयायांवान्यतमति-
थौकार्यम् तिथ्यादिसंकीर्त्य आत्मनोदारिद्र्यपापदुःखनाशपूर्वकं सत्पुत्रप्रास्यतुलभोगसिद्धिद्वारासवितृरूपी परमेश्वर प्रीत्यर्थं मलमासव्रतंकरिष्ये
इतिसंकल्प्य मध्यान्हेसर्वतोभद्रस्थकलशेहैमंलक्ष्मीयुतंजनार्दनंसंपूज्य नानाविधपक्वान्ननैवेद्यंदत्वा फलपुष्पोपेतमर्घ्यंदद्यात् तत्रमंत्रः देव-
देवजगन्नाथप्रलयोत्पत्तिकारक गृहाणार्घ्यंमयादत्तंकृपांकुरुममोपरि ततः सपत्नीकंब्राम्हणंवस्त्रादिनासंपूज्य त्रयस्त्रिंशदपूपान्कांस्य-
पात्रेनिधाय सघृतंसहिरण्यंवायनंब्राह्मणायनिवेदयेत् तत्रमंत्रः विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने नरकोत्तारणार्थाय अच्युतः प्रीयतामिति
इतिदत्वा छत्रोपानद्भूषणाच्छादनादियुतांशय्यांचदत्वा पीठंव्रतपूर्तयेगांचदत्वानानाविधपक्वान्नैर्ब्राम्हणान् संतर्प्य आशिषोगृहीत्वास्वयंभुंजीत

इतिमलमासव्रतं अथश्रावणामायांपीठोराव्रतम् स्कांदे प्रातः स्नानादिनिर्वर्त्यवार्षिकवत्पूजांकृत्वोद्यापनसंकल्पंकुर्यात् तिथ्यादि 
आत्मनः स्व ०लस्यच संततिविच्छेदाभावपूर्वकं पुत्रपौत्रलक्ष्मीसुखवाधाभिवृद्ध्ये सप्तवर्षविध्याचरित पीठोराव्रतस्य संपूर्णतासि-
सप्तमातृकाप्रीत्यर्थं तदुद्यापनाख्यंकर्मकरिष्ये वृताचार्यः उक्तप्रकारेणसर्वतोभद्रे अष्टौकलशान्प्रतिष्ठाप्य
सकलशेषुक्रमेण ः सप्तप्रतिमानामसंत्रेण ब्राम्हीं० माहेश्वरीं० कौमारीं० वैष्णवीं० वाराहीं० इंद्राणीं० चामुंडां० आवाह्य० ब्रम्हजज्ञानं०
मातृरोइत्य तदुत्तरे सुवर्णादिनिर्मिते पूर्णपात्रयुते कलशेचतुः षष्ठियोगिनीः हेमप्रतिमासु अक्षतपुंजेषुवाआवाहयेत् दिव्ययो-
गिनी० १ ०२ सिद्धयोगिनीं० ३ गणेश्वरीं० ४ प्रेताक्षीं० ५ डाकिनीं० ६ कालीं० ७ कालरात्रिं० ८ निशाचरीं० ९ ३ँकारीं० १०
११ हिंकारीं० १२ भूतडाबरीं० १३ ऊर्ध्वकेशीं० १४ विरूपाक्षीं० १५ शुष्कांगीं० १६ नरभोजनाम्० १७ सराडीं० १८ वीरभद्रां० १९
नीं० २० कलहप्रियां० २१ राक्षसीं० २२ घोररक्ताक्षीं० २३ विरूपां० २४ भयंकरीं० २५ भासुरीं० २६ रौद्रवेतालीं० २७ श्रीपर्णीं० २८ त्रिपुरांत-
कां० २९ भैरवीं० ३० ध्वंसिनीं० ३१ क्रोधिनीं० ३२ दुर्मुखीं० ३३ प्रेतवाहिनीं० ३४ कंटकीं० ३५ नाटकीं० ३६ यमदूतीं० ३७ करालीं ३८ खट्वांगीं० ३९ दीर्घलंबो-
ष्ठीं० ४० मालिनीं० ४१ मंत्रयोगिनीं० ४२ कालाग्निगृहिणीं० ४३ चक्रीं० ४४ कंकालीं० ४५ भुवनेश्वरीं० ४६ स्फाराक्षीं० ४७ कार्मुकीं० ४८ लौकिकीं० ४९ काकदृ-
० ५० भक्षणीं० ५१ अधोमुखीं० ५२ प्रेरणीं० ५३ व्याघ्रीं० ५४ कंकणीं० ५५ प्रेतभक्षणीं० ५६ वीरकौमारिकां० ५७ चंडां० ५८ वाराहीं० ५९ मुंडधारिणीं० ६० 
० ६१ उड्डाणीं० ६२ जालंधरां० ६३ महालक्ष्मीं० ६४ ततः सुवर्णपात्रेण फलपुष्पयुतमर्घ्यंनाममंत्रेण प्रत्येकंदद्यात् रात्रिंनिनयेत् प्रातः पीठदेवताः संपूज्य

अग्निं प्रतिष्ठाप्यान्वादध्यात् सप्तमान्तः अष्टोत्तरशतमाज्याहुतिभिः योगिनीभ्यैकैकयाज्याहुत्या ब्रह्मादिदेवताभ्यैकैकयाज्याहुत्यायस्ये पूजामंत्रेणहोमः
होमस्तुकृतास्तुतः ततः सप्तमिथुनानि वस्त्रादिना संपूज्य वस्त्रदक्षिणाप्रतिमायुतान् कलशान् तेभ्यो दद्यात् तत्र मंत्रः सोपस्करंच कलशं गृह्णाणाद्विजसत्तम
प्रीयंतां मातरो मत्यं लोकानां स्थिति हेतवः ततो योगिनीपीठमाचार्याय दत्वा व्रतपूर्तये अष्टौगास्तेभ्यो दत्वा सदन्नेन संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत इ
ति पिठोरा व्रतम् इति श्रीमच्छि० व्रतोद्यापनकौमुद्यां तिथिव्रतानि समाप्तानि अथ चातुर्मास्य व्रतारंभः ततः स्वस्तिक व्रतं भविष्ये तत्तु आषाढादि आ-
श्विनांतं तत्र विधिः देवालये गोष्ठे तुलस्यालये गृहे वा गोमयोपलिप्त शुद्ध भूमौ पंचरंगैर्वर्णैः मत्स्य हंस हस्त स्वस्तिकानि लिखित्वा तत्र गोपालं संपूजयेत्
एवं चरित्वा तेउद्यापनं कुर्यात् तद्यथा तिथ्यादि संकीर्त्य आत्मनः शत्रुजयार्थं पापक्षयार्थं चे धव्यादि निरसन पूर्वकं पुत्र पौत्र सौभाग्यारोग्यावाप्ति द्वारा आ
चरितस्य स्वस्तिक व्रतस्य पूर्णता सिद्ध्ये गोपाल प्रीत्यर्थं च तदुद्यापनं करिष्ये ततो वृताचार्यः सर्वतोभद्रस्थ कलशे हेमं गोपालं इदं विष्णुरिति मंत्रेणास-
स्थाप्य पूजयेत् प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात् गोपालं स्वस्तिक दशांशेन शतांशेन वा घृताक्त पायस द्रव्येण ब्रह्मादि देवताभ्यैकैकयाज्याहुत्याय-
स्ये होममंत्रः स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिमिति पौराणमंत्रस्तु स्वस्तिस्तु परमं देवं स्वस्ति कारणकारणं स्वस्त्ययं पापसंहारं कुरु मे तेभ्यो न-
मः स्वाहेति होमदशांशेन तर्पणा होममंत्रेण तद्दशांशेन ब्राह्मणभोजनम् ततो विशिष्टान् दश ब्राह्मणान् वस्त्रादिना संपूज्य तेभ्यः पंचरंगयुतान्यौर्णा
न्यभावे दर्भजान्यप्यासनानि दक्षिणापुरःसरं दत्वा सोपस्करमाचार्यायासनं दत्वा व्रतपूर्तये गोमिथुनं च दत्वा अधिक फलावाप्तये यवानां द्रोणं
तदभावे आढकीनां द्रोणं दत्वा पक्वान्नैर्ब्राह्मणान् संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत इति स्वस्तिकव्रतं अथ श्रावणांत्य भृगुवासरे

१ सप्तमिथुनेभ्य· सप्तआचार्याय चैकादेयेत्यर्थः २ ऊर्णानिर्मितानि

करिष्ये तिथ्यादिसंकीर्त्य आत्मनः अतुलसौभाग्यपुत्रपौत्रादिप्राप्तिपूर्वकमधिकलक्ष्मीप्राप्तये वरदलक्ष्मीव्रतं करिष्ये शङ्ख्भू
पे पंचरंगशोभितवेदिकायां प्रस्थतंडुलस्थकलशोपरि हैमीं लक्ष्मीप्रतिमां सत्कुमिव जिनेति मंत्रेण आवाह्य श्रीसूक्तेन पू-
येत् अथांगपूजा वरदलक्ष्म्यै नमः पादौ पूजयामि कमलवासिन्यै॰ गुल्फौ पू॰ पद्मालयायै॰ जंघे पू॰ श्रियै नमः जानुनी पू॰ इंद्राण्यै॰ ऊ
२० हरिप्रियायै॰ कटिं पू॰ लोकधात्र्यै नमः नाभिं पूज॰ शंखनिध्यै नमः हस्तौ पू॰ त्रैलोक्यपावन्यै॰ कंठं पू॰ मायायै॰ मुखं पू॰ धात्र्यै॰ बा-
॰ पद्मनिध्यै॰ नयने पू॰ भार्गव्यै॰ कर्णौ पू॰ क्षीरसागरजायै॰ ललाटं पू॰ वरदलक्ष्म्यै नमः शिरः पू॰ महालक्ष्म्यै नमः सर्वांगं पूजयामि
ततोऽश्वत्थबिल्वचूतदाडिममालतीनां प्रत्येकं एकविंशतिपत्रैर्वरदलक्ष्म्यै नम इत्यनेन पूजयेत् एकविंशत्यपूपपायसनैवेद्यं पुनरर्घ्यं क्षीरार्णवसुते ल-
क्ष्मि चंद्रस्यैव सहोदरि गृहाणार्घ्यं महालक्ष्मि देवि तुभ्यं नमो नमः ततः दोरकग्रहणम् सर्वमंगलमांगल्ये सर्वपापप्रणाशिनि दोरकं प्रतिगृण्हा-
सुप्रीता भव मे शुभे ततः कंठे दोरकबंधनं करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः श्रियं देहि यशो देहि सौभाग्यं देहि मे शुभे ततः प्रार्थयेत्
न्स्व पुत्रपौत्रांश्च विष्णुवक्षस्थले स्थिते श्रियं देहि यशो देहि सर्वान्कामांश्च देहि मे ततो वायनपंचकं दद्यात् क्रमेण विप्राय पतये देव्यै ब्रम्हचा-
रिणे सुवासिन्यै च तत्र मंत्रः एकविंशति पक्वान्नशर्करा घृतसंयुतम् वायनं ते प्रयच्छामि इंदिरा प्रीयतामिति ततः क्षमाप्य ब्राह्म-
णान्सुवासिनीः सदन्नेन संतर्प्य शक्तौ सत्यां गां च दत्वा मौनेन भुंजीत इति वरदलक्ष्मीव्रतम् अत्र व्रतेनानेन देवी तुष्टा न वा तत्र परीक्षा
श्रीदलं त्वेकं क्रमुकं चूर्णवर्जितम् भक्षयित्वा तु चेलांते बध्वा प्रातर्निरीक्षयेत् आरक्ते सति सुप्रीता देवी ज्ञेया विचक्षणैः अन्यथा-

तद्व्रतंकार्यंसर्वथाभूतिमिच्छता अथाश्विनशुक्लपक्षांतभानुवासरमारभ्य माघशुद्धसप्तम्यवधिदानफलव्रतम् स्कांदे तिथ्यादिसंकीर्त्य आत्मनः सत्पुत्रप्राप्तिपूर्वकंसुरवारोग्यतासिद्धिद्वारासवितृप्रीत्यर्थंदानफलव्रतंकरिष्ये तदंगंसवितृपूजनंकरिष्ये इतिसंकल्प्य गोमयोपलिप्तशुद्धभूमौता- म्रपीठेसवितारमावाह्यपूजयेत् तत्रध्यानं ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टः केयूरवान्मकरकुंडलवान्किरी टीहारीहिरण्मयवपुर्धृतशंखचक्रः जगन्नाथायनमः आवाहनं० पद्मासनाय० आसनं० ग्रहपतये० पाद्यं० नमोहन्त्रे० अर्घ्यं० मित्राय० आचम नीयं० विश्वतेजसे० स्नानं० जगत्पतये० वस्त्रं० त्रिमूर्तये० उपवीतं० हरये० गंधं० सूर्याय० अक्षतान्० भास्कराय० पुष्पं० अहःपतये० धूपं० अज्ञाननाशिने० दीपं० लोकेशाय० नैवेद्यं० विश्वतेजसे० तांबूलं० सूर्याय० दक्षिणां० विश्वतेजसे० नीराजनं० भास्कराय० मंत्रपुष्पं० पूष्णे० प्रद- क्षिणा० सर्वात्मने० नमस्कारं० ततोद्वादशार्घ्याणिताम्रादिपात्रेजलाक्षतपुष्पादिप्रक्षिप्यदद्यात् दिवाकरनमस्तुभ्यंपापंनाशयभास्कर त्रयी मयार्कविश्वात्मन्गृहाणार्घ्यंनमोस्तुते ततोब्राह्मणंसंपूज्यदेवींविसर्जयेत् स्वयंतैलाम्ललवणंबहुबीजफलादिवर्ज्यंभोजनंकुर्यात् कंदमूलफ- लाहारेणविशेषफलं एवंप्रतिभानुवासरंमाघशुद्धसप्तम्यवधिकर्तव्यम् ततःउद्यापनम् तत्रषष्ठ्यामुपोष्यप्रातःस्नात्वापूर्वसंकल्पमुक्त्वासंपूर्ण तासिद्ध्येतदुद्यापनंकरिष्ये इतिसंकल्प्य ततोवृताचार्येमध्याह्नेसर्वतोभद्रस्थकलशेहैमंरौप्यरथस्थंसूर्यं आकृष्णेनेतिमंत्रेणसंस्थाप्यपूर्व- वत्पूजयेत् ततोग्निंप्रतिष्ठाप्यान्वाधाय सवितारंघृताक्तपायसद्रव्येणसहस्रमष्टोत्तरशतंवातत्संख्याकाहुतिभिः ब्रह्मादिदेवताभ्यएकैकया ज्याहुत्यायक्ष्ये ततःपायसपूरितकांस्यपात्रपीठंव्रतपूर्तयेगांचआचार्यायदत्वापरमान्नेनद्वादशब्राह्मणान्संतर्पयेत् एवंकुर्यात्पंचवर्षंपंचधा

न्यंततोर्पयेत् पंचप्रस्थप्रमाणंचसफलंदक्षिणान्वितम् क्रमेणपंचवर्षेषु व्रीहयः १ गोधूमाः २ लवणं ३ तिलाः ४ माषाः ५ एवंकृतेसकलम-
नोरथावाप्तिर्भवति इतिदानफलव्रतम् अथधारणापारणाव्रतं भविष्ये चातुर्मास्यैकादशीमारभ्यमासचतुष्टयंमासंवाकार्यम् तिथ्यादिसं-
कीर्त्य आत्मनोबंधुवधादिजनितपापक्षयपूर्वकंउत्तमलोकप्राप्त्यर्थंधारणापारणाव्रतंकरिष्ये गणेशंसंपूज्य विष्णुपीठे अष्टाक्षरमंत्रेणषोडशोपचारैः
एकादश्यामुपवसेत् ततःप्रातःस्नात्वादेवंसंपूज्य अष्टाक्षरमनुमष्टोत्तरशतंजप्त्वा तेनैवाष्टोत्तरशतमर्घ्यंदत्वा ब्राम्हणभोजनपुरःसरं मौनीस्व
यंभुंजीत एवंमासंचरित्वाएकादश्यामुद्यापनंकुर्यात् उक्तप्रकारेणवृताचार्यः सर्वतोभद्रस्थकलशेहेमंलक्ष्मीनारायणंविष्णोर्नुकमिति मंत्रेणसंस्था
पचामृतस्नानपुरःसरंसंपूज्यरात्रिंजागरणादिनानिनयेत् प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् प्रधानंविष्णुंनिषुसीदेतिमंत्रेणातिलोदनेनआराधि-
येइतिमंत्रेणघृतोदनेनअष्टाक्षरमंत्रेणपायसेनचाष्टोत्तरशतसंख्याकाहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततःप्रतिमासंपंचदशब्रा-
न्नसदन्नेनसंतर्प्यपीठंव्रतपूर्तयेगांच आचार्यायदत्वास्वयंभुंजीत इतिधारणापारणाव्रतम् अथआश्विनशुक्लैकादशीं आरभ्यमा-
सपर्यंतंमासोपवासव्रतम् विष्णुरहस्ये तिथ्यादिसंकीर्त्य आत्मनोऽशेषपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्ध्येमहाविष्णुप्रीत्यर्थंमासोपवासव्र
प्रत्यहंत्रिकालस्नानं विष्णुमंत्रजपोविष्णुपूजनंतुलसीदलानामर्पणंअसंदालापवर्जनंपुराणपठणंश्रवणंच ब्राम्हणपूजनंयथाशक्तिदानंचए
वमादिनियमान्कुर्यात् अंतेएकादश्यामुद्यापनंकुर्यात् उक्तप्रकारेणवृताचार्यः सर्वतोभद्रस्थकलशेहेमम् लक्ष्मीनारायणंसहस्रशीर्षेतिऋचा
द्वादशाक्षरमनुनावासंस्थाप्यपुरुषसूक्तेनपूजयेत् कथाश्रवणादिनारात्रिंनीत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् लक्ष्मीनारायणंपायसद्रव्येणस

१ अष्टाक्षर मंत्रं २ तिलयुक्तेनओदनेन ३ मिथ्या भाषण वर्जनं

हस्वसंख्याकाहुतिभिर्ब्रम्हादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततः पीठंगांच आचार्यायदत्वा वेदशास्त्रसंपन्नांस्त्रिंशद्ब्राम्हणान्वस्त्रपात्र-
भूषणादिभिः संपूज्य त्रिंशद्दास्तन्मौल्यंवादक्षिणात्वेनदत्वासोपस्करांशय्यांगुणवतेज्ञानवते द्विजायदत्वासदन्नेन ब्राम्हणान् संतर्प्य आशि
षोगृहीत्वा विष्णुलोकगमनार्थं द्विजान् प्रार्थयेत् भोद्विजाअनुमोदध्वं विष्णुलोकंप्रयाम्यहम् ततोद्विजाःप्रतिवदेयुः व्रजव्रजनरश्रेष्ठ विष्णु-
लोकमनामयं विमानंवैष्णवं दिव्यंशय्यायां परिकल्पितम् तेनविष्णुपदंयाहि सच्चिदानंदरूपिणम् ततोदीनानाथान्मतोष्य स्वयंमौनीभुंजीत
अशक्तेनतुकंदमूलफलपयोभक्षणादिनाकर्तव्यम् सर्वपापप्रमुक्तोभवति इतिमासव्रतम् अथचातुर्मास्ये अवश्यंत्याज्यानिलिख्यंते श्रा
वणेवर्जयेच्छाकंदधिभाद्रपदेतथा दुग्धमाश्वयुजेमासि कार्तिके द्विदलंत्यजेदिति स्कांदे भविष्ये शाकव्रतंनित्यम् द्विदलंबहुबीजंवृत्ताकं
जंबीरंराजमाषंरक्तमूलकंकूष्मांडंइक्षुदंडंबदरीनूतनफलंतिंतिणींधात्रीमंचकखट्वादिशयनं अनृतौभार्यां अन्यदिनेमासंमधुपलोदनम् अन-
भक्ष्यं सितसर्षपं आशुधान्यं अबीजफलं सदैवविकारि दशविधशाकं मूलंपत्रांकुराग्राणि फलंकांडादिरूढकाः त्वक्पुष्पंकवचंचेतिशा
कंदशविधंस्मृतम् दग्धान्नंपर्युषितान्नंउष्ट्रादिदुग्धं द्विजक्रीतरसाः ४ ताम्रपात्रस्थंगव्यंच पाल्वलंजलम् आत्मार्थंपाचितम् गृंज
नं लशुनं पलांडुं पटोलं मसूरं कुलित्थं कलिंगं बिल्वमुदुंबरंभिःसटां प्राणयंगचूर्णम् भूमिजंलवणम् निष्पावान् पूर्वोक्तानि अन्यान्य-
पितिथिषुनिषिद्धानित्याज्यानि त्यक्तंयन्मासपर्यंतं तदंतेब्राम्हणायदत्वा व्रतपूर्तयेगांचदत्वा स्वयंभुंजीत अन्यान्यपिव्रतानितदुद्यापना-
निचलिख्यंते भविष्ये कार्तिक्यांसर्वेषामुद्यापनानि नक्तव्रतेगौर्देया एकांतरोपवासेगौः भूशयनेशय्या षष्ठकालभोजनेगौः व्रीहिगोधूमादि

१ आश्विने २ ऋतुकालविना ३ पल्वलं क्षुद्रजलाशयः ४ दग्धान्नंकापइनिख्यातं

धान्यत्यागे हेमव्रीह्या[1] दिशाकान्ने गौः पयोमधुदधिघृतव्रतेषु वासोयुगं गौश्च ब्रम्हचर्ये हेमविष्णुमूर्तिः तांबूले वासोयुगुलं मौने घृतकुंभं वस्त्र-
युगं घंटाच देवादेरंगमालिकाकरणे धनुर्हेमपद्मंच देवालये दीपकरणे दीपिका वासोयुगंच भूमिभोजने पर्णभोजनेच कांस्यपात्रं गौश्च च-
तुष्पथदीपे गौः गोग्रासे वृषभः देवादीनांशनप्रदक्षिणाकरणे वस्त्रं एवमेवान्यवस्तुत्यागे गौर्देया अथवारव्रतानि सौरधर्मे तत्रमार्गशी-
रे सूर्यव्रतम् तिथ्यादिसंकीर्त्य आत्मनोरोगक्षयपुत्रलाभादिप्राप्तिपूर्वकमभीष्टकामनासिद्ध्यर्थं वर्षात्मकं सूर्यव्रतं करिष्ये इति
संकल्प्य गोमयोपलिप्तभूमौ पंचरंगैर्द्वादशपद्मं विलिख्य तत्र ताम्रपात्रं निधाय तन्मध्ये रक्तचंदनादिना पद्मं विरच्य तत्र वक्ष्यमाणरीत्या सूर्यं सं-
पूज्य मार्गशीर्षादिद्वादशमासेषु क्रमेण देवानाम् ध्यानं नैवेद्यं स्वभक्षणं दानंच ज्ञेयम् तत्र मार्गशीर्षे मित्रं नारिकेरार्घ्यं साज्यगुडतंडुलनैवेद्यं तु-
लसीपत्रत्रयभक्षणं साज्यगुडभक्तदानं १ पौषे विष्णुं॰ बीजपूरं॰ कृसरान्नं॰ फलत्रयं॰ घृतं॰ घृतंच॰ २ माघे वरुणं॰ पूगीफ-
र तिलगुडं मुष्टित्रयंतिलाः सगुडकुडवतिलाः ३ फाल्गुने सूर्यं॰ जंबीरं॰ सघृतंदधि॰ दधि॰ तंडुलाः ४ चैत्रे भानुं॰ दाडिमं॰ घृतपूरिका॰
लत्रयं॰ दुग्धं॰ मिष्टान्नं ५ वैशाखे तपनं॰ द्राक्षा॰ सघृतं॰ माषान्नं॰ अंगुष्ठार्धगोमयं॰ माषाः ६ ज्येष्ठे इंद्रं॰ सहकारं॰ करंभं॰ अंजलित्रयं ७ आ
॰जातीफलं॰ पृथुकाः मरीचत्रयं॰ पृथुकाः ८ श्रावणे गभस्तिमंतं॰ त्रपुषीफलं॰ यवसक्तुमुष्टित्रयं॰ यवसक्तु॰ यथेष्टभोजनं॰ ९ भाद्रपदे यमं॰
कूष्मांडं॰ तंडुलाज्यं॰ फलद्वयं गोमूत्रं॰ भोजनं॰ १० आश्विने हिरण्यरेतसं॰ दाडिमं॰ शर्करा॰ शर्करापलत्रयं॰ शर्कराभक्तम् ११ कार्तिके दिवाकरं॰ रंभाफलं॰ पा
पायसं॰ पायसं॰ १२ एवंवर्षपर्यंतंचरित्वांते मार्गशीर्षादिरविवासरे उद्यापनं कुर्यात् उक्तप्रकारेण वृताचार्यो मध्यान्हे सर्वतोभद्रे कलशं प्रति ५२

१ सुवर्णनिर्मितंव्रीह्यादिकं देयं

स्थाप्य तदुपरि रक्ताक्षतयुतं ताम्रमयं पूर्णपात्रं निधाय तत्र द्वादशारं कमलं विरच्य तन्मध्ये रौप्यमयं रथं प्रतिष्ठाप्य तदुपरि हैमं संज्ञा[1] सहितं स-
हस्रकिरणं आकृष्णेनेति मंत्रेण प्रतिष्ठाप्य परितो द्वादशदलेषु द्वादशमासाधिपान् क्रमेण पूजयेत् मित्रं १ विष्णुं २ वरुणं ३ सूर्यं ४ भानुं ५ तपनं ६ इं-
द्रं ७ रविं ८ गभस्तिं ९ यमं १० हिरण्यरेतसं ११ दिवाकरं १२ ततो रक्ताक्षतपुष्पवस्त्रादिभिः संपूज्य परमान्नेन नैवेद्यं दत्वा विशेषार्घ्यं नारीकेलयुतं द-
द्यात् तत्रमंत्रः नमः सहस्रकिरण सर्वव्याधिविनाशन गृहाणार्घ्यं मया दत्तं संज्ञया सहितो रवे एवं पूजां समाप्य ततः सूर्यदैवतं श्राद्धं कृत्वा ततः आचा-
र्योऽग्निं प्रतिष्ठाप्यान्वादध्यात् संज्ञासहितं सहस्रकिरणं पायसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिः द्वादशपरिवारदेवताः ब्रह्मादिदेवताश्चैकैकयाज्या-
हुत्वायदस्ये ततो द्वादशब्राह्मणान् संतर्पयेत् इति सूर्यव्रतम् अथ आशादित्यव्रतम् भविष्ये आश्विनाद्यरविवारमारभ्य प्रतिरविवारं वर्षपर्यंतं कुर्या-
त् तिथ्यादि संकीर्त्य आत्मनः सकलरोगनिरसनपूर्वकं पुत्रपौत्रसकलाभीष्टसिद्धिद्वारा सवितृप्रीत्यर्थं आशादित्यव्रतं करिष्ये इति संकल्प्य गो-
मयोपलिप्तभूमौ रक्तचंदनादिना वर्तुलमंडलं विरच्य तत्र मासाधिपं देवमावाह्य षोडशोपचारैः संपूज्य रक्तपुष्पाक्षतादियुक्तं सजलं ताम्रपात्रेणा-
र्घ्यं भूमौ जानुनी निपात्य दद्यात् तत्रमंत्रः यथाशा विमलाः सर्वास्त्वत्प्रभा भास्कर भानुभिः तथाशा विमला मह्यं कुरु नित्यं ममार्घ्यतः ततो नम-
स्कारः नमोऽस्तु ते पापविनाशनाय विश्वात्मने सप्ततुरंगमाय सामर्ग्यजुर्धामनिधे विधात्रे भवाब्धिपोताय नमः सवित्रे अनेन मंत्रेण मासाधिप
नाममंत्रेण च पूजा कार्या मासाधिपनामानि सूर्यः १ धाता २ वरुणः ३ माधवः ४ हरिः ५ रविः ६ रुद्रः ७ भर्गः ८ स्वर्णरेताः ९ अर्यमा १० भानुः
११ भास्करः १२ एवं प्रतिभानुवारं वर्षपर्यंतं चरित्वांते आश्विनाद्यरविवारे उद्यापनं कुर्यात् ततः वृताचार्यः सर्वतोभद्रे रक्तवस्त्रवेष्टितं ताम्रकलशं-

१ संज्ञानामकासूर्यस्त्री २ पायसेन ३ आशादिशाः ४ किरणैः

प्रतिष्ठाप्य ताम्रमयं पूर्णपात्रं निधाय तत्र रक्ताक्षतैर्द्वादशारं कमलं विरच्य तन्मध्ये रौप्यरथे हैमं सवितारं आकृष्णेनेति मंत्रेण संस्थाप्य परितो द्वादशदले-
ततोऽभिं प्रतिष्ठाप्य होमयेत् प्रधानं सवितारं पायसद्रव्येणाष्टोत्तरशत संख्याकाहुति-
: पंह्वा.द.२ : ॥५ ये : : द्वादशब्राह्मणान् वस्त्रादिभिः संपूज्य तेभ्यः शालितंडु
: क . . . १ ~ . . ८ ऽचार्याय पीठं व्रत पूर्तये गां च दत्वा सदन्नेन ब्राह्मणान् संतर्प्य
अन्नपायससपूरितताम्रपात्रदानम् रणमपि कृताकृतं एवं कृते सर्वव्याध्यादिदुःखैर्मुक्तो भ-
वति अथ सोमवारव्रतस्कांदे तत्रग्रहणविधिः श्रावणे चैत्रे वैशाखे ज्येष्ठे मार्गशीर्षके एतेषामन्यतमे मासि शुक्लप-
क्षे इंदुवारयुताष्टम्यां ग्राह्यं अथवा प्रथमसोमवासरे च यावज्जीवं कर्तव्यं अथवाष्टवर्षपर्यंतं कर्तव्यं अंते उद्यापनं कुर्यात् तद्यथा तिथ्यादिसं
कीर्त्य आत्मनः अशेषपापक्षयपूर्वकं सत्पुत्रप्राप्ति धनधान्यैश्वर्यादि वृद्धि द्वारा ऽमुककामनया चरितस्य सोमवारव्रतस्य सांगतासिद्ध्यर्थं तदुद्या-
पनं करिष्ये वृताचार्यः चतुर्द्वारोपशोभित मंडपांतः अष्टादशांगुलोत्सेधां वितस्तिद्वय विस्तृतां समचतुरस्त्रां मृदा वेदिं निधाय तत्र शु-
क्ल तंडुलैः षोडशारं कमलं विरच्य अथवा पंचरंगशोभितं लिंगतोभद्रं विरच्य तत्र ब्रह्मादिदेवता आवाह्य तदुपरि अक्षतपुंजे श्वेतवस्त्र
. प्रतिष्ठाप्य तदुपरि साक्षतं पूर्णपात्रं निधाय तत्र हैमं शिवं त्र्यंबकमिति मंत्रेण हैमीं गौरीं च गौरीर्मिमायेति मंत्रेण पुरतो राजतं वृषभं च
: पूर्वादिक्रमेण अनंतं १ सूक्ष्मं २ शिवं ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकंठं ७ शिखंडिनं ८

ग्नेयादिविदिक्षु गणेशं १ मातॄः २ दुर्गां ३ क्षेत्रपालं ४ पुनः पूर्वादिदिक्षु लोकेशांस्तत्तन्मंत्रैः प्रतिष्ठाप्य पंचाक्षर्या[1] पूजयेत् पुष्पोत्तरमंग
पूजा शिवायनमः पादौ पूजयामि शंकरायन० गुल्फौ पू० भवहारिणे० जानुनी पू० शूलपाणिने० कटीं पू० शंभवे० गुह्यं० महादेवाय० नाभिं
० विश्वकर्त्रे० उदरं पू० सर्वतोमुखाय० पार्श्वौ पू० स्थाणवे० स्तनौ० नीलकंठाय० कंठं० देवाय० मुखं पू० त्रिनेत्राय० नेत्रे पू० शर्वाय० लला
० शशिभूषणाय० शिरः पूजयामि देवाधिपाय० सर्वांगं पू० एवं संपूज्य रात्रिंजागरणादिनानीत्वा प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात् सोमं शि
त्र्यंबकमितिमंत्रेण पलाशसमिद्भिः आप्यायस्वेतिमंत्रेण पृषदाज्ये नत्वं सोमासीतिमंत्रेण यवव्रीहिपायसतिलाज्यद्रव्यैः प्रत्येकमष्टोत्त
तसंख्याकाहुतिभिः गौरीं च त्रिमध्वाक्तदूर्वाभिस्तावतीभिः आहुतिभिः परिवारदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायस्ये केचनगौ
रीहोमं पृथगिच्छंति ततः षोडश त्रयोदश वा ब्राह्मणान् वक्ष्यमाणनामभिः संपूज्य तावतः फलपक्वान्नैरभावे तंडुलैर्वा पूरितान् घटान् दक्षि-
णायुतान् दद्यात् षोडशनामानि सोमेश्वरः १ ईशानः २ शंकरः ३ गिरिजाधवः ४ महेशः ५ सर्वभूतेशः ६ स्मरारिः ७ त्रिपुरां
तकः ८ शिवः ९ पशुपतिः १० शंभुः ११ त्र्यंबकः १२ चंद्रशेखरः १३ गंगाधरः १४ महादेवः १५ वामदेवः १६ त्रयोदशपक्षे भवः १ शर्वः
२ रुद्रः ३ पशुपतिः ४ उग्रः ५ महान् ६ भीमः ७ ईशानः ८ सद्योजातः ९ वामदेवः १० अघोरः ११ तत्पुरुषः १२ ईशानः १३
ततः पीठं व्रतपूर्तये धवलां गां च आचार्याय दत्वा आशिषो गृहीत्वा स्वयं भुंजीत भविष्ये तु प्रकारांतरेण सोमवारव्रतम् तत्र व्रतविधिः
प्रातर्नद्यादौ स्नात्वा ऽमुककामनया सोमवारव्रतं करिष्ये इति संकल्प्य प्रदोषे पीठे देवं वक्ष्यमाणप्रकारेण पूजयेत् इदं सोमवारव्रत-

[1] शिवपंचाक्षरमंत्रेण·

मष्टेंदुवारात्मकं नवमे सोमवारे उद्यापनं कुर्यात् तत्र प्रथमे सोमवारे बीजपूरकाष्ठेन दंतधावनं कुर्यात् चूतपल्लवचंदनादियुते कुंभे साक्षतपा त्रे आधारशक्तिसहितं शिवं पंचास्यं प्रतिष्ठाप्य श्वेतवस्त्रपुष्पैः प्रपूज्य विविध भक्ष्य भोज्य नैवेद्यं बीजपूरफलं च दत्वा स्वयं चंदनं प्राश्य सो- मेशं ध्यायन् दर्भशय्यायां स्वपेत् भौमवासरे ब्राम्हणभोजनपुरःसरं पारणं कुर्यात् एवं कृते सर्वव्याधिविनाशनं भवति द्वितीयादौ विशेषो लिख्यते अन्यत् पूर्ववत् द्वितीये करंजदंतकाष्ठं ज्येष्ठाशक्तियुतं सूक्ष्मदेवं शतपत्रपुष्पं नारिंगफलं घृतपाचित शष्कपूरिका नैवेद्यं आ त्मनो मधुभक्षणं एवं कृते गोलक्षदानफलं प्राप्नोति तृतीये बदरदंतकाष्ठं रौद्रीशक्तियुतं शिवोत्तमं देवं जातीपुष्पं शष्कभक्ष्यनैवेद्यं दाडि- मफलं गोमूत्रप्राशनं कन्याकोटिदानफलं चतुर्थे अपामार्गदंतकाष्ठं एवं शक्तियुतं रुद्रदेवं चंपकपुष्पं कदलीफलं क्षीरशर्करानैवेद्यं दधिप्राशनं अयुतयज्ञफलं पंचमे अश्वत्थदंतकाष्ठं उमाशक्तियुतं रुद्रदेवं पद्मपुष्पं दधिभक्तनैवेद्यं कूष्मांडफलं घृतप्राशनं सू पजन्मार्जितब्रम्हहत्यानाशनरूपं फलम् षष्ठे जंबूदंतकाष्ठं त्रिमूर्तिशक्तियुतं बलदेवं करवीरपुष्पं फलपायसमंडकनैवेद्यं खर्जू रीफलम् कुशोदकप्राशनं षडब्दप्रायश्चित्तफलं प्राप्नोति सप्तमे प्लक्षजदंतकाष्ठं बलप्रमथिनीशक्तियुतं श्रीकंठदेवं बकुलपुष्पं पाय- सनैवेद्यं नारीकेलफलं क्षीरभक्षणं सप्तसागरसहितभूमिदानफलम् अष्टमे खादिरदंतकाष्ठं सर्वभूतदमनाशक्तियुतं शिखंडिनं दे- सुगंधपुष्पम् नानाविधफलम् नानाविधभक्ष्यभोज्यनैवेद्यं गोमयप्राशनम् सर्वदानोद्भवं फलम् सर्वरात्रिषु जागरणम् पुराणपठणा श्यकम् नवमे सोमवारे उद्यापनं कुर्यात् तद्यथा तिथ्यादि संकीर्त्य ममाभीष्टकामनासिद्ध्यर्थं आचरितं यत्सोमवारव्र-

तंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये पूर्ववद्वृताचार्यः चतुर्द्वारोपशोभितमंडपांतः मृदाष्टांगुलोच्छ्रितांसमचतुरस्रां अष्टादशांगुल
प्रमाणांवेदींकृत्वातत्रलिंगतोभद्रंविरच्य वेदीपरितोष्टदिक्षुपंचवर्णैः पद्मानिविरच्यतेषुब्रम्हादिदेवताआवाह्य तत्रकलशपूर्ववत्संस्था
प्यतत्ररुक्मशय्यायांहैमंसर्वशक्तियुतंसोमेशं ॐनमःशिवायेतिप्रतिष्ठाप्य वेदीपरितः स्थापनविधिनाअष्टौकलशान्प्रतिष्ठाप्यतेषुक्रमेणदे
वान्आवाहयेत् अनंतं१सूक्ष्मं२शिवं३उत्तमं४त्रिमूर्तिं५रुद्रं६श्रीकंठं७शिखंडिनं इतिप्रतिष्ठाप्यपूजयेत् देवायवस्त्रालंकारनानाविधः
पुष्पधूपदीपकर्पूरदीपविविधनैवेद्यफलतांबूलदक्षिणाछत्रचामरादर्शादिसमर्प्यस्वयंपंचगव्यंप्राश्यपुराणपठनादिनारात्रिंनिनयेत् प्रातर्देवंसं
पूज्यअग्निंप्रतिष्ठाप्यान्वाधाय अत्रप्रधानं सर्वशक्तियुतसोमेशंपलाशसमिद्धृतपायससतिलव्रीहियवमधुदूर्वाद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसं-
ख्याकाहुतिभिः तथाऽनंतादिशिखंड्यंताऽष्टौदेवतास्तैरेवद्रव्यैःप्रतिद्रव्यमष्टाष्टसंख्याकाहुतिभि ब्रम्हादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये क्र
मेणद्रव्याष्टकस्यहोममंत्राः त्र्यंबकं०१आप्यायस्व०२ॐनमःशिवाय३तमीशानं०४अभित्वादेव०५कद्रुद्राय०६तत्पुरुषाय०७ऋतं॰स-
त्यंपरंब्रम्ह०८ परिवारदेवतानांनाममंत्राः एवंहोमंसंपाद्यआचार्यंवस्त्रादिनासंपूज्य पीठंव्रतपूर्त्यर्थंधवलांगांचदत्वा अन्यानष्टौब्राम्हणान्वस्त्रादि-
नासंपूज्य शालितंडुलोद्भवपक्वान्नपूरितानष्टौकलशान्दक्षिणासहितान्दद्यात् तत्रमंत्रः पक्वान्नपूरितंकुंभंदक्षिणादिसमन्वितं गृहाणत्वंद्वि-
जश्रेष्ठव्रतसंपूर्णहेतवे इतिदत्वाब्राम्हणभोजनपुरःसरंस्वयंभुंजीत इतिसोमवारव्रतम् अथश्रावणाद्यसोमवारेशिवामुष्टिव्रतम् शिवधर्मो
त्तरेदंतधावनपूर्वकंनद्यादौस्नात्वानित्यकर्मनिर्वर्त्यशिवसन्निधौगत्वा तत्रसंकल्पयेत् तिथ्यादिसंकीर्त्य ममेहजन्मनिअखिलपापक्षयपू

र्वक दुःखदारिद्र्यनाशविपुलसुखसौभाग्यैश्वर्यपुत्रपौत्रादिप्राप्त्यर्थं श्रीशिवप्रीत्यर्थं पंचवर्षात्मकं पंचधान्येन शिवमुष्टिव्रतं करिष्ये
गणेशपूजनादि कृत्वा शिवं पञ्चामृतपुरःसरं संपूज्य मंत्रपुष्पांते धान्यं समर्प्य प्रथमं शालितंडुलान् द्वितीयं यवान् तृतीयं गो
न् पंचमं मुद्गांश्च एकैकं पंचप्रस्थं प्रस्थं वा अशक्तौ निष्किंचनेन तु न्यूनं ततः प्रार्थयेत् प्रसीद देवदेवेश प्रसीद परमेश्वर
द करुणाकर शिवः शर्वो महादेवो रुद्रो भूतगणेश्वरः ममास्तु सह पार्वत्या शंकरः शंकरः सदा एवं पंचसंवत्सरं त्रीन् एकं वाचरेत्
नं कृत्वा पूर्ववत् संकल्पांते वृताचार्यः एकलिंगोद्भवपीठे कलशं संस्थाप्य राजतं पूर्णपात्रं निधाय तत्र हैमीं उमेशप्रतिमां राजतं वृषभं संस्थाप्य लो
केशं वा पूर्ववत् पूजयेत् सुवर्णनिर्मितं धान्यं कृत्वा पंचसंख्यया त्रीणि त्रीणि सुवर्णबिल्वदलानि अथवा रौप्यमयानि
कृत्वा धान्यसंख्यया समर्पयेत् रात्रिं कथाश्रवणादिना निनयेत् प्रातः पूर्ववत् पूजां कृत्वा ध्यानादध्यात् उमेशास
भिस्तिलाज्यद्रव्यैः गायत्रीमंत्रेण प्रतिद्रव्यं अष्टोत्तरशतसंख्याकाहुतिभिः लोकपालान् ब्रह्मा भुंजीत अन-
य पंचरत्नानि समर्प्य आचार्याय पीठं व्रतपूर्तये गां च दत्वा दक्षिणादिना प्रतोष्य द्विजदंपती पूजयेत् मया-
तान्नप्रदां स्थालीं सर्वकामफलप्रदां द्रौपद्यै प्रददौ शंभुः कष्टोत्पत्तिविनाशिनीं व्रतेनाराधितः पूर्वं पंचवर्षात्मकेन च रा ५५
पसा सर्ववर्णा व्रतमाचरेयुः एवं यः कुरुते देवि नवाग्रे व्रतमुत्तमम् कामनां पूरयेत्तस्मादिह राज्यमकंटकं
ज्यार्थी लभते राज्यं मोक्षार्थी मोक्षमेव च इति शिवमुष्टिव्रतम् इति सोमवारव्रतम् अथ भौमवारव्रतम् तत्र श्रावणशुक्ले प्रथम[1]

[1] दरिद्रेण।

वारेमंगलागौरीव्रतम् भविष्ये तिथ्यादिसंकीर्त्य आत्मनःसौभाग्यपुत्रपौत्राद्यैहिकनानाविधभोगप्राप्तिपूर्वकगौरीलोकप्राप्त्यर्थं आचरितं
यत्पंचवर्षात्मकं मंगलागौरीव्रतंतत्संपूर्णफलावाप्तयेतदुद्यानंकरिष्ये वृताचार्यः एकलिंगोद्भवेब्रह्मादिदेवतास्थापनपूर्वकं तदुपरिकलशंप्र
तिष्ठाप्य तत्रहैमीं गौरीं गौरीमिमायेति मंत्रेणप्रतिष्ठाप्यपूजयेत् परितः पिष्टजानुडमर्वाकारान् षोडशतंतुवर्तियुतान् दीपान् प्रज्वाल्यसाग्रान्
षोडशपर्वयुतान् षोडशदूर्वांकुरान् समर्प्यसौभाग्यवस्तुजातं सुवर्णवर्तियुतं राजतदीपं चसमर्प्य कथाश्रवणादिनारात्रिं निनयेत् प्रातरग्निंप्र
तिष्ठाप्यान्वादध्यात् गौरीं घृततिलाक्षतबिल्वदलद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताभ्यैकैकयाज्याहुत्यायष्ट्वे त
तः षोडशाष्टौचतुरोवादंपतीतदभावे एकंवासं पूज्य सौभाग्यद्रव्यवस्त्रदक्षिणाफलतांबूलादिसहितं पक्वान्नं पूरितं वंशपात्रं उपायनमि
दंदेव इतिमंत्रंपठंस्तेभ्योदद्यात् ततःआचार्यंसंपूज्य रौप्यपात्रेसुवर्णवर्तिसंयुतंदीपंकृत्वाऽचार्याय दत्वा सोपस्करं पीठंव्रतपूर्तयेगांचद
त्वा ताम्रपात्रं पक्वान्नपूरितंवस्त्रादियुतं मात्रेदत्वा परमान्नेनभू देवान् संतर्प्य आशिषोगृहीत्वा मौनीइष्टजनैःसहभुंजीत इतिमंगलागौरी-
व्रतम् अथभौमवारव्रतंभविष्ये तत्रादौयंत्रप्रकारमाह त्रिकोणं पूर्वमुद्धृत्य पंचधाविभजेत्ततः तृतीयरेखाचिन्हाभ्यां लांछयेत्सम-
भागतः आद्यरेखाग्रयुगुलं तृतीयाचिन्हयोर्न्यसेत् तृतीयरेखामध्येतुचिन्हयेत्समभागतः तुर्यांचिन्हद्वयेनाथत्रिभिश्चिन्हैस्तुपंचमीं तृ
तीयाग्रेप्रकुर्वीत पंचम्यामध्यचिन्हगम् तुर्याग्रेयोजयेत्सम्यक् पंचम्याचिन्हयोर्द्वयोः युक्त्यामहयेदद्यात्त्रिकोणोविंशतिर्भवेत् तृ-
तीयतुर्ययोर्मध्येत्रिकोणेतुसमर्चयेत् एवंतदग्रेतोमंत्रान् त्रिकोणेदक्षिणक्रमात् मंगलाद्यांस्तारपूर्वान्नमोंतानेकविंशतिः एकविंश-

त्रिकोष्ठेषुनाममंत्रान् समालिखेत् ततः पूजाप्रकर्तव्या पुत्रसंपत्तिहेतवे इतियंत्रम् अथपूजाविधिः मार्गशीर्षेमाघेवैशाखे श्रमा
शुक्लपक्षेचंद्रानुकूल्ये भौमवासरे अरुणोदयकाले अपामार्गकोष्ठेन दंतधावनं मौनेनकृत्वा आचम्य तिलामलकचूर्णेनांगोद्वर्तनं कृत्वा
नद्यादौगृहेवा स्नात्वाधौतंरक्तं वस्त्रमुत्तरीयंच धृत्वा संध्यादिविधायरक्तचंदन रक्ताक्षतैः रक्तपुष्पैश्चताम्रपात्रस्थजलेनांगारक गायत्र्या अ
इति मंत्रेणवाएकविंशतिवारं अंगारकायार्घ्यं दत्वा ततोगृहमागत्य भूमिपतितेन गोमूत्रेण सुरभिगोमयेन हस्तमात्रां भूमिं विलिप्य
तंत्रिकोणंमंडलंरक्तचंदनेन संविलिख्य तत्रस्थगोधूमराशिंकृत्वा तत्रताम्रमयंरक्तंमृन्मयंवाकलशंसंस्थाप्य तदु
ताम्रमयंपूर्णपात्रंनिधाय तत्ररक्तचंदनेन त्रिकोणंमंडलं विधाय तत्रताम्रमयंभूर्जपत्रमयंवा त्रिकोणमेकविंशतिकोष्ठात्मकमेकविंशा ॥
युतं यंत्रंसंस्थाप्य पूजासामग्रीं संपाद्य संकल्पंकुर्यात् तद्यथा शुद्धासनेउपविश्य प्राणानायम्यदेशकालसंकीर्तनांते आत्मनः ॥
पूर्वकधनधान्यपुत्रपौत्राद्यभीष्टमनोरथसिद्ध्यर्थंमंगलव्रतं तत्पूजनंच करिष्ये इतिसंकल्प्य गणेशपूजनपूर्वकं पुण्याहवाचनादिकृत्वा -
जोमारभेत् तत्रादौ देवंप्रार्थयेत् अथदेवेशतेभक्त्या करिष्येव्रतमुत्तमम् ऋणदुःखादिनाशाय पुत्रसंतानहेतवे अभीष्टान् ममदेवेश
र्णान् मनोरथान् ततोभूतशुद्ध्यादिकृत्वान्यासंकुर्यात् ॐ मंगलायनमः शिखायां० भूमिपुत्राय० मूर्ध्नि० ऋणहर्त्रे० ललाटे० धनप्रदाय० च
० स्थिरासनाय० कर्णयोः० महाकाय० नासिकयोः० सर्वकर्मावरोधकाय० मुखे० लोहिताय० हनौ० लोहिताक्षाय० कंठे०
कराय० स्कंधयोः धरात्मजाय० बाह्वोः कुजाय० करयोः० भौमाय० हृदये० भूतिदाय० उदरे० भूमिनंदनाय० नाभौ० अंगारकाय० कट्या

धर्माय० ऊर्वोः० सर्वरोगापहारकाय० जान्वोः० वृष्टिकर्त्रे० जंघयोः० वृष्टिहर्त्रे० गुल्फयोः० सर्वकामफलप्रदाय० पादयोः० ततो मां मीं मूं मैं-
मौं मः इति षडक्षरैः षडंगन्यासं कृत्वा स्ववामभागे कलशाराधनं कृत्वा तत्पश्चिमतः स्ववामभागे षट्कोणं वृत्तं चतुरस्रात्मकं मंडलं सा-
धारमर्घ्यपात्रं निधाय जलेनापूर्य गंधाक्षतपुष्पादि तत्र प्रक्षिप्य मंडलेन गायत्र्या वाष्टवारमभिमंत्रयेत् तद्दक्षिणे त्रिकोणमंडले साधारणं सजलं प्रोक्षणी
पात्रं संस्थाप्य गंधपुष्पाक्षतादि प्रक्षिप्य मूलेनाष्टवारमभिमंत्र्य तज्जलं किंचिदर्घ्यपात्रे निक्षिप्य धेनुमुद्रां प्रदर्श्य प्रोक्षणीपात्रजलेनात्मानं द-
क्षिणस्थ पूजाद्रव्याणि च प्रोक्ष्य पात्रांतरे स्थापितं यंत्ररूपं देवं ध्यायेत् पिंगाक्षं रक्तवर्णं स्फुरत रुद्दलभं रक्तवस्त्रेण युक्तं मेषारूढं ग्रहेंद्रं त्वखिल
धितजनैः पूजितं सुप्रसन्नं ध्यायेदेतान्दधानं वरदकरयुतं शूलशक्तिं गदां च भौमं चैश्वर्यसिद्धिं निखिलनिधिविभुं मंगलं चिंतयामि एह्येहि भ-
गवन् भौम स्थाने चात्र स्थिरो भव त्वयि सर्वमिदं प्रोतं त्रैलोक्यं सचराचरम् उज्जयिन्यां समुद्भूत शूलशक्तिगदाधर भरद्वाजकुलोत्पन्न स्कंदप्रियत
डित्प्रभ यावत्पूजां समाप्येत् तावत्त्वं सन्निधो भव पूजां गृहाण वरदो भव ॐ ह्रीं श्रीं मंगलाय नमः अयं मूलमंत्रः अंगारकाय विद्म
हे भूमिपुत्राय धीमहि तन्नो भौमः प्रचोदयात् इयं गायत्री अग्निर्मूर्धेति वैदिको मंत्रः मंगलं सांगं सपरिवारं आवाहयामि प्रत्युपचारं मंत्रत्र
यं पठेत् भूमिपुत्राय० आसनं० धनप्रदाय० पाद्यं० स्थिरासनाय० अर्घ्यं० मंगलाय० दधिमधुसर्पिर्युतं मधुपर्कं० महाकायाय० आचमनी
यं० ऋणहर्त्रे० पंचामृतस्नानं० ततो गंधादिभिः संपूज्य पुरुषसूक्तेनाभिषेकं कुर्यात् सर्वकर्माविरोधकाय० शुद्धोदकस्नानं ततः पूर्वो-
क्तस्थापनविधिना स्थापिते कलशे गृहा वै प्रतिष्ठेति प्रतिष्ठाप्य परितः पूर्वादिक्रमेण परिवारान् स्थापयेत् पूर्वे शक्तिं० आग्नेय्यां शूलं द-

धेनुः नैर्ऋत्येशरं पश्चिमेगदां वायव्यांवरदं उत्तरेषडाननं ईशान्यांधरांआवाह्य सहैवपूजयेत् लोहिताय॰ वस्त्रं॰ लोहिताक्षाय॰ कौ॰
॰ सामगानांकृपाकुराय गंधं॰ धरात्मजायपुष्पं॰ अथैकविंशतिकोष्ठेषु अंगानि एकविंशतिनामभिः पूजयेत् मंगलायपादौ॰ भूमिपुत्राय॰
गुल्फौ॰ ऋणहर्त्रे॰ जंघे॰ धनप्रदाय॰ जानुनी॰ स्थिरासनाय॰ ऊरू॰ महाकायाय॰ कटीं॰ सर्वकर्मावरोधकाय॰ नाभिं॰ लोहिताय॰ उदरं॰
॰ हृदयं॰ सामगानांकृपाकुराय॰ करौ॰ धरात्मजाय॰ बाहू॰ कुजाय॰ स्कंधौ॰ भौमाय॰ कंठं॰ भूतिप्रदाय॰ हनुं॰ भूमिनंदनाय
॰ अंगारकाय॰ नासिकां॰ यमाय॰ कर्णौ॰ सर्वरोगापहारकाय॰ चक्षुषी॰ वृष्टिकर्त्रे॰ ललाटं॰ वृष्टिहर्त्रे॰ मूर्धानं॰ सर्वकामफलप्रदाय॰ शि-
॰ नतोनानापरिमलद्रव्यार्पणं॰ कुजाय॰ धूपं॰ भौमाय॰ दीपं॰ भूतिदाय॰ गुडमिश्रगोधूमान्ननैवेद्यं सोपस्करंवा॰ भूमिनंदनाय॰ फलं॰
अंगारकाय॰ तांबूलं॰ यमाय॰ दक्षिणां॰ सर्वरोगापहारकाय नीराजनं॰ नानावैदिकमंत्रपाठपुरःसरं वृष्टिकर्त्रे॰ पुष्पांजलिं॰ वृष्टिहर्त्रे॰ प्रद
॰ सर्वकामफलप्रदाय॰ नमस्कारं॰ भूमिपुत्रमहातेजः स्वेदोद्भवपिनाकिनः धनार्थीत्वांप्रपन्नोस्मिगृहाणार्घ्यंनमोस्तुते अनेनमंत्रे-
वैशतिअर्घ्याणिदद्यात् मंगलाय इदमर्घ्यं समर्पयामि :कार्यः ततोज
: अस्यश्रीमंगलमं॰ ब्रह्माऋषिः त्रिष्टुप्छंदः मंगलोदेवता॰ मंबीजं माहेश्वरोभूमिपुत्रइतिशक्तिः
शताधिकद्विसहस्रपरिमितजपमहंकरिष्ये मांमींमूंमैंमौंमः अनेनकरन्यासंहृदयादिन्यासंकृत्वाजपेत् २१००० ५७
डंगन्यासंकृत्वाकवचंजपेत् तद्यथा शिखायांमंगलःपातुभूमिपुत्रस्तुमूर्धनि ललाटेऋणहर्ताचचक्षुषोश्चधनप्रदः स्थिरासनः

सिके आस्यजिव्होष्ठदंतेषु सर्वकर्माविरोधकः हनौ मां लोहितः पातु कंठं लोहितलोचनः स्कंधयोरुभयोरक्षेत्सामगानां कृपाकरः धरात्मजो भुजौ पा-
तु कुजो रक्षेत्करद्वयं भौमो मां हृदये पातु भूमिजस्तु तथोदरे भूनंदनो यनाभौ च कट्यामंगारकोवतु सक्थिनी मंगलो रक्षेज्जान्वोरोगापहारकः
जंघयोर्वृष्टिकर्ता च वृष्टिहर्ता च गुल्फयोः पादांगुष्ठौ च पादौ च सर्वकर्मफलप्रदः शक्तिर्मे पूर्वतो रक्षेच्छूलं रक्षतु दक्षिणे पश्चिमे मां धनू रक्षेदुत्तरे
च शरस्तथा ऊर्ध्वं पिंडाननः पातु अधस्तात्पृथिवी तथा एवं हि कवचं जप्त्वा पश्चाद्धोमं समाचरेत् अथ होमः तिथ्याद्युच्चार्य मंगलव्रतांगभूतकृतज
पदशांशेन हवनं करिष्य इति संकल्प्य देवाग्रे सन्मृदा त्रिकोणं स्थंडिलं कृत्वा स्वगृह्यविधिना अग्निं प्रतिष्ठाप्यान्वादध्यात् अन्नरवादिरइध्मात्र
प्रधानं मंगलं गुडाज्यमिश्रित तिलद्रव्येण कृतजपदशांशेन यक्ष्ये मूलमंत्रेण जुहुयात् खर्जूरीफलेन पूर्णाहुतिं हुत्वा होमशेषं समापयेत् ततो
गायत्रीं पठित्वा मंगलं तर्पया० इति गोदुग्धेन तर्पणं कुर्यात् एवमेकविंशति नाम्ना मूहः कार्यः तथैव अनृणेति मंत्रं पठित्वा मार्जनं कुर्यात्
ततो वायनं मंगलरूपिणो द्विजाय इदं पाद्यमित्यादि संपूज्य तांबूलदक्षिणा सहितानेकविंशतिसंख्याकान् गुडमिश्रित तिलचूर्णलड्डुकान्
दद्यात् तत्रमंत्रः मंगलायनमस्तुभ्यं सर्वमंगलकारक वायनेन च संतुष्टो मम कामान् प्रपूरय अनेन वायनेन ऋणमोचन भौमः प्रीयतां ततः
खादिरांगारके ऋणसंज्ञ करे रवा त्र्यं कृत्वा वामपादतलेन मार्जयेत् तत्रमंत्रः दुःखदौर्भाग्यनाशाय धनसंतानहेतवे मार्जयाम्यसितारेखास्ति
स्रो जन्मत्रयोद्भवाः ततो मंगलस्तोत्रं पठेत् मंगलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः स्थिरासनो महाकायः सर्वकर्माविरोधकः लोहितो लोहिताक्षश्च
सामगानां कृपाकरः धरात्मजः कुजो भौमो भूतिदो भूमिनंदनः अंगारको यमश्चैव सर्वरोगापहारकः वृष्टिकर्तापहर्ता च सर्वकामफलप्रदः एता

ग्रं· ५८

१०

ऋणंनजायतेतस्यधनंयच्छतिवांछितं उत्तिष्ठब्रह्मणास्पतइति उत्थाप्यविसर्जयेत् कथांश्रुत्वाब्राम्ह-
भोजनपुरःसरंसगुडगो एवंप्रकारेणप्रतिभौमवासरएकविंशतिभौमवासरपर्यंतंकर्तव्यं ततोद्वाविंशतितमेभौमवास
इतिसंक-
१५ त कलश
पुराणपठनादि-
प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अन्नप्रधानं
श्रावावेदिकेनवाएकविंशतिपरिवारदेवताः तेनेवद्रव्येणाष्टाष्टसंख्याकाहुतिभिः मंत्रेणगाय-
त्त्रासानाममंत्रेणहोमः सर्वहोमंसंपाद्य पूर्वोक्तैरेकविंश॥
लचूर्णपूरितान्रक्तवस्त्रदक्षिणासहितान् कलशान्दद्यात् तत्रमंत्रः मंगलस्तारकोभाभ्यांमंगलायनमोनमः इतिदत्वा
आचार्यरक्तवस्त्रादिनासंपूज्यतस्मैपीठंव्रतपूर्तयेरक्तांसुरभिं तवेसतिसोपस्करांशय्यांचदत्वासदन्नेनब्राम्हणान् संभोज्य दक्षिणा
भिः प्रतोष्यआशिषोगृहीत्वा इष्टजनैः सहभुंजीत इतिभौमव्रतं अथशनैश्वरव्रतंस्कांदे श्रावणशुक्लपक्षाद्यशनिवारे तत्रविधिः प्रा-
तःशमीकाष्ठेनदंतान् विशोध्यनद्यादौस्नात्वा नित्यकर्मनिर्वर्त्यपूजासामग्रीमादाय शमीमूलंतदभावेश्वत्थमूलंगत्वा तत्रमृदावेदिकांविधाय
तत्रधनुष्याकारंमंडलंविलिख्य तत्रकृष्णायसनिर्मितांमहिषासनांद्विभुजांदंडपाशधरांशनैश्वरमूर्तिंविधायकृष्णवस्त्रवेष्टितांच कृ-

५८

॥ ॥

त्वाएवंपीठपूर्विकांसंपाद्य संकल्पंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्य आत्मनः अखिलदुःखदौर्भाग्यनिरसनपूर्वकं इहजन्मनिजन्मांतरेच अतु
लसुखपुत्रपौत्रधनधान्याद्यभिवृद्ध्यर्थं शनैश्वरव्रतंकरिष्ये गणेशपूजनादि विधायपूजामारभेत् तत्रादौ प्राणप्रतिष्ठां कृत्वा ध्यायेत् शनैश्च
रंदीर्घदेहं दंडपाशधरंतथा पिंगाक्षंस्थूलदेहंच ध्यायामिरविनंदनम् इतिध्यात्वा शमग्निरग्निभिरितिवैदिकेन शनैश्वरायनमइतिनाममंत्रे
णचापूजयेत् तिलतैलेन पुरुषसूक्तेन तत्सूक्तेन चाभिषेकंकुर्यात् कृष्णवस्त्रेणसप्ततंतुभिश्चवेष्टयेत् एवंषोडशोपचारैःसंपूज्य सप्तप्रद
क्षिणाः सप्तनमस्कारान् कृत्वास्तुवीत नमःकृष्णाय नीलायश्वेतकंठनिभायच नमश्चर्षपागात्राय स्थूलरोम्णेनमोनमः तपसादग्धदेहाय-
नित्यंयोगधरायच नमस्तेज्ञाननेत्राय काश्यपायार्कसूनवे इतिस्तुत्वा ततोविप्रंसंपूज्य प्रस्थतिलैर्वायनंसदक्षिणंदत्वा देवंविसृज्य
गृहमागत्य तिलपिष्टविमिश्रितान् लड्डुकान् ब्राह्मणायदत्वास्वयंतथैव भुंजीत एवंप्रकारेणत्रयस्त्रिंशच्छनिवासरपर्यंतं प्रतिशनिवारंकर्तव्यं
असामर्थ्येतुश्रावणशनिवासरेषुकर्तव्यं एवंचरित्वांतेउद्यापनंकुर्यात् पूर्वसंकल्पमुक्त्वा शनैश्वरव्रतोद्यापनंकरिष्यइतिसंकल्प्य
वृताचार्यउद्यापनविधिना कलशप्रतिष्ठांतंकृत्वा तत्रसुवर्णशमीपत्रेहेमद्विभुजं शनैश्वरंउक्तविधिनाप्रतिष्ठाप्य सप्ततंतुमितरुक्मोत्त-
रीयं कृष्णवस्त्रसप्तकंच समर्प्यपूजयेत् ततोग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं शनैश्वरं शमीसमित्तिलाज्यद्रव्यैः प्रत्येकमष्टोत्तरशत
संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततः सप्तद्विजान्संपूज्यतेभ्योदक्षिणायुतानि सप्त तिलपात्राणिदत्वा आ-
चार्यायपीठंगांचदत्वा तिलमिश्रपक्वान्नेन भूदेवान्संतर्प्य आशिषोगृहीत्वास्वयंभुंजीत इतिशनैश्वरव्रतम् अथशनिरोहि

कौ॰ शः

व्र॰ ५९

पौषव्रतम् भविष्ये नक्षत्रे शुक्लप्रतिपूर्णिमा शनिवासरो रोहिणीनक्षत्रं च तदा कर्तव्यम् तिथ्यादि संकीर्त्य ममेह ज
व्याधिभयशान्त्यादि सर्वदुःखनाशन पूर्वक दीर्घायुर्विपुलपुत्रपौत्राद्यभिवृद्धि द्वारा स्थिरलक्ष्मीकीर्तिलाभशत्रुपराज
यत्वर्थं च शनिरोहिणीव्रतं करिष्ये इति संकल्प्य गणेशपूजनादि विधाय सुवर्णादिगुटिकायां रोहिणीसहितं शनैश्चरं ले
मंत्रेण प्रतिष्ठाप्य वक्ष्यमाणप्रकारेण पूजयेत् तत्रादौ ध्यानं नीलांजनसमाभासं रविपुत्रं यमाग्रजं छायामार्तंडसंभूतं नीलां विभुम् च
तुर्भुजं मंदगतिं शूलिनं गृध्रसंस्थितं किरीटिनं धनुष्मन्तं चिन्तयामि शनैश्चरम् इति ध्यात्वा शमग्निरिति मंत्रं प्रत्युपचारं पा ॐ तूं सूर्यपुत्राय॰
आवाहनं॰ शनैश्चराय॰ आसनं॰ पंगुशरीराय॰ पाद्यं॰ अर्कनंदनाय॰ अर्घ्यं॰ यमाग्रजाय॰ आचमनीयं॰ छायासुताय॰ स्नानं॰ क्रोधसुखाय॰
॰ वस्त्रं॰ अंतकाय॰ उपवीतं॰ कृष्णाय॰ गंधं॰ रुद्राय॰ पुष्पं॰ बभ्रुसुखाय॰ धूपं॰ पिंगललोचनाय॰ दीपं॰ काश्यपाय॰ नैवेद्यं॰ यमाग्रजाय॰ तां-
बूलं॰ नीलांजनसमप्रभाय॰ दक्षिणां॰ भास्करनंदनाय॰ नमस्कारं॰ एवं संपूज्य ततस्तिलानां वायनं दत्वा देवं लोहं सदक्षिणं विप्राय दत्वा सु
वर्णगुटिकां रहसि सुरक्षितां स्थापयेत् ब्राह्मणभोजनपुरःसरं तिलमिश्रितपक्वान्नं स्वयं भुंजीत एवं प्रतिरोहिणीसप्तकपर्यंतं कर्तव्यं प्रतिरोहि
कोत्तरवारवृद्ध्या गुटिकावृद्धिः कर्तव्या एवं च सित्वा सप्तम्यां रोहिण्यामुद्यापनं कुर्यात् पूर्वसंकल्पमुक्त्वा उद्यापनं करिष्य इति संकल्प्य
चार्यः सर्वतोभद्रस्थकलशे एकोत्तरवारवृद्ध्या संपादित सुवर्णगुटिका स्थं हैमं रोहिणीसहितं शनैश्चरं पूर्ववत् संस्थाप्य पूजयेत् अग्निं प्रति-
न्वादध्यात् अत्र प्रधानं रोहिणीसहितं शनैश्चरं शमग्निरित्यस्य साज्यतिलद्रव्यैः प्रत्येकं अष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेव-

५९

ताभ्यैकैकयाज्याहुत्यायक्ष्ये होममंत्रस्तु अन्नृणेतिमंत्रस्य विश्वेदेवाऋषयः कल्पोक्तादेवता त्रिष्टुप्छंदः हवनेविनियोगः
ॐ अनृणाऽस्मिन्निति : एवंहोमं संपाद्य सप्त द्विजान् संपूज्य तेभ्योदक्षिणा सहितान् तिलपूरित करकान् दत्वा
आचार्यायशनिप्रतिमां कृष्णांगांचदत्वा ब्राम्हणभोजन पुरःसरंस्वयंभुंजीत एकोत्तरवार दृष्ट्या संपादितगुटिका सुवर्णस्य अंगुलीयकं कृत्वा
यावज्जीवंधारयेत् एवंकृतेसर्वपीडानिरसन पूर्वकं सर्वमनोरथावाप्तिर्भवति इतिश्रीमच्छि॰ व्रतोद्यापनकौमुद्यांवारव्रतानि समाप्तानि अथसं
क्रांतिव्रतानि तत्रादौधान्यसंक्रांतिव्रतम् हेमाद्रौस्कांदे इदंव्रतमेकवर्षात्मकं तत्रग्रहणविधिः अयनसंक्रांतौविषुवसंक्रांतौ वाव्रतग्रहणम्
संक्रांतिदिनेप्रातः शुक्लतिलैर्स्नात्वा गोमयोपलिप्तशुद्धदेशे कुंकुमादिनाष्टदलंपद्मं विरच्य पूजासामग्रीं संपाद्य संकल्पंकुर्यात् तद्य-
था तिथ्यादिसंकीर्त्य ममाग्निष्टोमादि फलप्राप्ति पूर्वकं सप्तजन्मसु धनधान्यपुत्रादि समन्वित निर्व्याधि सुरूपप्राप्त्यादिसिद्धि द्वाराश्रीसवितृ-
रूपी परमेश्वर प्रीत्यर्थं धान्यसंक्रांतिव्रतं करिष्ये इतिसंकल्प्य गणेशं संपूज्य पूर्वनिर्मितपद्मकर्णिकायां विश्वात्मनेनमइति नाममंत्रेण आवाह्य
पूर्वादिषु पत्रेषु क्रमेण देवताः आवाहयेत् भास्करं १ रविं २ विवस्वंतं ३ पूषणं ४ आदित्यं ५ तपनं ६ मार्तंडं ७ भानुं ८ एवमावाह्य
पूजयेत् अर्घ्यमंत्रः कालात्मन्सर्वदेवात्मन्वेदात्मन्विश्वतोमुख व्याधिमृत्युजराशोकसंसारभयनाशन ततः प्रस्थपरिमितंधान्यं स
दक्षिणाकं ब्राम्हणायदत्वा आशिषो गृहीत्वा मौनेनस्वयंभुंजीत एवंप्रतिसंक्रांतौ संवत्सरांते उद्यापनंकुर्यात् मंडलेपूर्वोक्तप्रकारेण
देवता आवाह्य स्रुवर्णनिर्मिताध्यपात्रेणार्घ्यंदत्वा संपूज्यद्रोणपरिमितं तदर्धं तदर्धं वा धान्यमाचार्याय पीठसहितंदत्वा ब्राम्हणान् संभो-

ज्यस्स्वयंभुंजीत इति धान्यसंक्रांतिव्रतम् अथलवणसंक्रांतिव्रतम् स्कांदे तिथ्यादि संकीर्त्य अनेकविधसुखप्राप्तिपूर्वक सू
र्यप्रसादद्वाराश्रीपरमेश्वरप्रीत्यर्थंलवणसंक्रांतिव्रतं करिष्ये इतिसंकल्प्य पूर्ववत् पद्मे भास्करं संपूज्य तदग्रे सगुडं लवणपात्रं निधाय देवंप्र
येत् पूजितस्त्वंयथाशक्त्या प्रसीद मम भास्कर व्रतंसंपूर्णतांयातु त्वत्प्रसादाद्दिवाकर ततः सगुडंलवणंदक्षिणायुतंब्राम्हणाय दत्वास्स्वयंभुं
जीत वत्सरांते पूर्ववन्मंडले सौवर्णं भानुं संपूज्य स्ववर्णनिर्मितकमलयुतंद्रोणपरिमितं लवणं दक्षिणायुतंदत्वा गांचदत्वा ब्राम्हणान् भोज
इतिलवणसंक्रांतिव्रतम् अथभोगसंक्रांतिव्रतम् स्कांदे तिथ्यादिसंकीर्त्य आत्मनोनेकविधभोगप्राप्तिपूर्वकं श्रीपरमे
श्वरप्रीत्यर्थं भोगसंक्रांतिव्रतं करिष्ये इतिसंकल्प्य पूर्ववत् पद्मे भानुं संपूज्य त्रिभ्योधिकानि मिथुनानि संपूज्य तेभ्यो वायनानि कुंकुम
लसिंदूरस्रगंधपुष्पतांबूलशालितंडुलदक्षिणायुतानि दत्वा भुंजीत संवत्सरांते मंडले सौवर्णं भानुं संपूज्य द्वादशमिथुनेभ्यः
पूर्वोक्तानि वस्त्रयुग्मसहितानि वायनानि दत्वा गां च दत्वा ब्राम्हणान् भोजयेत् इति भोगसंक्रांतिव्रतम् अथरूपसंक्रांतिव्रतं स्कांदे ति
थ्यादिसंकीर्त्य ममकमनीयरूपप्राप्तिपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं रूपसंक्रांतिव्रतं करिष्ये इतिसंकल्प्य पद्मे पूर्ववद्भानुं संपूज्य कांस्य
पात्रस्थघृते रूपं वीक्ष्य दद्यात् वत्सरांते मंडले सौवर्णं भानुं संपूज्य होमपात्रस्थं घृतं हिरण्यसहितं गां च दत्वा फलभूयस्त्वकामो घृतधेनुम 
त्वा ब्राम्हणान् भोजयेत् इति रूपसंक्रांतिव्रतम् अथतेजःसंक्रांतिव्रतं स्कांदे तिथ्यादिसंकीर्त्य आत्मनोतितेजस्त्वप्राप्तिकामनया श्री
सवितृप्रीत्यर्थं तेजःसंक्रांतिव्रतं करिष्ये इतिसंकल्प्य पूर्ववत् पद्मे सवितारं संपूज्य तत्पुरतः शालितंडुलपूर्णं करकं संस्थाप्य तन्मध्ये मोदकं तदुपरि-

दीपंज्वलंतंकृत्वा ब्राह्मणसंपूज्यतस्मैदद्यात् संवत्सरांतेमंडलेसौवर्णंभानुंसंपूज्य तदुत्तरतः शालितंडुलपूर्णेताम्रकलशेसुवर्णनिर्मितंदीपंकृत्वाब्राम्हणाय
दत्वागांकपिलांचदत्वाद्विजान्भोजयेत् इतितेजःसंक्रांतिव्रतम् अथसौभाग्यसंक्रांतिव्रतं स्कांदे तिथ्यादिसंकीर्त्य आत्मनोनुपमसौभाग्यप्राप्तिपूर्व
कभानुप्रीत्यर्थंसौभाग्यसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्यपूर्ववत्पद्मेभानुंसंपूज्य सपत्नीकायद्विजायसौभाग्याष्टकयुतंवस्त्रयुग्मसहितंवायनंचदत्वा
लवणंमौनीभुंजीत वत्सरांतेमंडलेभानुंसंपूज्य तत्पुरतोयथाशक्तिलवणाचलंकृत्वा तदुपरिकांचनंकमलंकृत्वा तत्संपूज्यसुरभिसहितंविप्राय-
प्रतिपादयेत् सौभाग्याष्टकंतु ऐक्षवंराजिकास्तद्वन्निष्पावाश्चसुशोभनाः धान्यकंजीरकंचैवकौसुंभंकुसुमंतथा लवणंचाष्टमंतद्वत्सौभाग्याष्टक
मुच्यते इतिसौभाग्यसंक्रांतिव्रतम् अथतांबूलसंक्रांतिव्रतम् स्कांदे तिथ्यादिसंकीर्त्य आत्मनोभर्त्रासहअतुलसुखप्राप्तिपूर्वकंसवि
तृप्रीत्यर्थंतांबूलसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्य पूर्ववद्भानुंसंपूज्य ततोदंपतीचंदनादिनासंपूज्य तयोःसोपस्करंतांबूलंदद्यात् एवं-
प्रतिदिनंसंवत्सरपर्यंत अंतेमंडलेपूर्ववद्भानुंसंपूज्य ताभ्यामेलालवंगजातीफलकंकोलजातीपत्रखादिरादिप्रत्येकंभांडेनिधाय रौप्यमयंचू
र्णपात्रंपूगप्रस्फोटनंपूगीफलानिनागवल्लीदलानिच सतिसामर्थ्येसुवर्णनिर्मितानिकानिचिन्नागवल्लीदलानिच रौप्यादिमयेपात्रेनिधाय संकल्प
पूर्वकंदद्यात् तांबूलंश्रीकरंभद्रंब्रम्हविष्णुशिवात्मकं अस्यप्रदानाद्देवेशपूर्णाःसंतुमनोरथाः इतिदत्वागांचदत्वाब्राम्हणान्भोजयेत्
इतितांबूलसंक्रांतिव्रतम् अथप्रकारांतरेणतांबूलव्रतम् भविष्ये तत्रग्रहणम् यदाआषाढशुक्लप्रतिपदिशिवेनक्षत्रंतदा-
रभ्यं अथवाआषाढशुक्लदशम्यांचातुर्मास्यव्रतम् तिथ्यादिसंकीर्त्य ममतांबूलव्रतकल्पोक्तफलावाप्तयेश्रीमहाविष्णुप्री-

१ आडकिना इतिप्रसिद्ध २ आरद्रा

त्यर्थं तांबूलव्रतं करिष्ये· पीठे फणान्वितशेषनागकन्यायुतं हरिं पुरुषसूक्तेन संपूज्य तदग्रे सपत्नीकं द्विजं संपूज्य सोपस्करं तांबूलं वीटीद्वयं देवा
द्विजाय च दत्वा नमेत् अंते कार्तिकशुक्लैकादश्यां पौर्णमास्यां वा उद्यापनं कुर्यात् तद्यथा तिथ्यादि संकीर्त्य आत्मनो नेकदानफलप्राप्तिपूर्व
विष्णुलोकप्राप्तिद्वारा नागकन्यायुतश्रीशेषपर्यंकशायी नारायणप्रीत्यर्थं आचरितं यत्तांबूलव्रतं तत्संपूर्णफलावाप्तये तांबूलव्रतोद्यापनं करि-
ष्ये इति संकल्प्य गणेशपूजनादि विधाय आचार्यं वृणुयात् वृताचार्य· पूर्ववन्मंडले ब्रम्हादिदेवताः संस्थाप्य तदुपरि कलशे रौप्यमये शेषेहा·१
तं नागकन्यायुतं नारायणं सहस्रशीर्षेति मंत्रेण संस्थाप्य परितः पूर्वादिदिक्षु ब्रम्हाणं ईशानं दुर्गां क्षेत्राधिपतिं च तत्तन्मंत्रैरावाह्य पुरुषसूक्तेन-
पंचामृताभिषेकपुरःसरं पूजयेत् नानाविधभक्ष्यभोज्ययुतं पायसोपहारं निवेदयेत् देवाग्रे द्रोणसंख्या पूगानि यथाशक्ति वा नागवल्लीपर्णयुतं सं
प्य देवं स्तोत्रैः स्तुवीत ततो दश नववा ताम्रपात्राणि कुंभान्वा पूगयुतानि रौप्यमयानि तावंति चूर्णपात्राणि तथा तीक्ष्णानि पूगप्रस्फोटनानि त-
था सुवर्णनिर्मितानि कानिचिन्नागवल्लीपत्राणि तथा एलालवंगादिमुखवासद्रव्यपात्राणि रौप्यमयानि तत्तद्रव्यपूरितानि च शूर्पनवके निधा
य वस्त्रद्वयेन संवेष्ट्य सप्तधान्योपरि देवाग्रे निधाय तत्र नागरूपं ध्यायेत् पूजयेत् प्रार्थयेच्च नागाधिपमहाराज तव भक्त्या प्रपूजनात् ईप्सि
तं देहि मे भीक्ष्णं सर्वसौख्यं सदा प्रभो ततो गीतवादित्रपुराणपठणादिना रात्रिं निनयेत् प्रातर्देवं संपूज्य अग्निं प्रतिष्ठाप्य अन्वादध्यात्
अत्र प्रधानं नारायणं अतोदेवा इति मंत्रेण खंडमिश्रितपायसाज्यद्रव्येण अष्टोत्तरसहस्रसंख्याकाहुतिभिः तथा समस्तव्याहृतिमंत्रेण प ६१
लाशसमित्तिलव्रीहिद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिर्ब्रम्हाद्यावरणदेवताः पायससमित्तिलव्रीहिद्रव्यैः अष्टाविंशतिसंख्या

१ सुवर्णम्

काहुतिभिः मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये एवंहोमंसंपाद्य दंपतीनवकंवस्त्रादिनापूज्यपूर्वंस्थापितंशूर्पनवकंतेभ्योदद्यात् तन्त्रमं
न्त्रः ताम्बूलश्रीकरंभद्रंब्रम्हविष्णुशिवात्मकं अस्यप्रदानाद्देवेशसफलंमेस्तुकांक्षितं ततस्तेभ्योनवगोदानानितदभावेतन्मौल्यंवा
क्षेणात्वेनदत्वादेवंप्रार्थयेत् ताम्बूलदानमाहात्म्यात्प्रीतोभवजनार्दन संपूर्णंकुरुमेदेवकांक्षितंपुरुषोत्तम ततःपीठमाचार्यायदत्वाक
पिलांगांचदत्वा ब्राम्हणभोजनपुरःसरंस्वयंभुंजीत इतिताम्बूलव्रतम् अथविशोकसंक्रांतिव्रतम् स्कांदे तिथ्यादिसंकीर्त्य आत्मनो
शोकसमन्वितपुत्रपौत्रादिवृद्धिद्वाराश्रीसवितृप्रीत्यर्थंविशोकसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्य पद्मेपूर्ववद्भानुंताम्रपात्रेसंपूज्य-
२१८ रक्ताभ्यापरिधायपूर्ववदर्घ्यंदत्वाब्राम्हणायगुडपूर्णकुंभंसदक्षिणाकंदद्यात् वत्सरान्तेमंडलेहेमभास्करंसपूज्ये गुडपर्वतेनसहपीठंकपिला
सहितंदद्यात् इतिविशोकसंक्रांतिव्रतम् अथआयुःसंक्रांतिव्रतम् स्कांदे तिथ्यादिसंकीर्त्यात्मनः दीर्घायुस्तेजस्त्वप्राप्तिपूर्वकमपमृत्युनिरा
श्रीसवितृप्रीत्यर्थंआयुःसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्य पाद्मे पूर्ववद्भानुंसंपूज्यब्राम्हणायकांस्यपात्रस्थितंगोघृतंदद्यात् वत्सरान्तेमंड
लेहेमंभानुंपूर्ववत्संपूज्यद्वात्रिंशत्पलमितेकांस्यपात्रेगोघृतंनिधाय सहिरण्यंब्राम्हणायदद्यात् तन्त्रमंत्रः कांस्यपात्रस्थितंगव्यमायुरा-
रोग्यकारकं सहिरण्यंददाम्येवंव्रतसंपूर्णहेतवे ततःकपिलांगांचदत्वाद्विजान्भोजयेत् इत्यायुःसंक्रांतिव्रतम् अथधनसंक्रांतिव्रतम् हे-
५ कांदे तिथ्यादिसंकीर्त्य आत्मनोविपुलधनप्राप्तिपूर्वकमायुरारोग्यपुत्रपौत्रादिप्राप्तिकामनयासवितृप्रीत्यर्थंधनसंक्रांतिव्रतंकरि-
ष्ये इतिसंकल्प्य पद्मेवारिपूर्णकलशंनिधायतत्रस्वर्णपात्रेभास्करंसंपूज्य सहिरण्यंकलशंद्विजायदद्यात् एवंप्रतिमासंवत्सरान्तेपूर्व

वन्मंडले यथाशक्ति घटितसुवर्णकलशे पद्महस्तं हैमं भानुं संपूज्य स्रुवर्णधनुः सहितं पीठं द्विजाय दत्वा सदन्नेन द्विजान् भोजयेत् सर्वसंक्रांतिव्र-
तेष्वितिकर्तव्यता धान्यसंक्रांतिवत् ज्ञातव्या इति धनसंक्रान्तिव्रतम् इतिश्रीमच्चि॰ व्रतोद्यापनकौमुद्यां संक्रांतिव्रतानि समाप्तानि अथव्य-
तीपातयोगव्रतम् वाराहे तत्रव्रतग्रहणविधिः मार्गशीर्षादिशुभमासे यदा व्यतीपातयोगस्तद्दिने नद्यादौ प्रातःस्नात्वा पावमानी-
र्जप्त्वा संकल्पं कुर्यात् तद्यथा तिथ्यादि संकीर्त्य आत्मनो निरतिशयैहिक स्रुख प्राप्तिद्वारा सकलपापक्षय पूर्वकं दिव्यविमानारूढो-
गीतनृत्य विलासय्सरोगणैर्वीज्यमानः सकलभोगयुत कल्पकोटिसूर्यलोकनिवासोत्तरं पुत्रपौत्रादि सकलसंपत्सहित महेश्वर्यादि गुणयुक्त राज-
राजत्वकामो[1] मुकुकामो वा व्यतीपातयोगव्रतं करिष्य इति संकल्प्य गणेशपूजनादि निर्वर्त्य शुद्ध भूमी पंचरंगोपेत कमले[2] कलशस्थापन प्रकारेण
शर्करापूरितं ताम्रकलशं प्रतिष्ठाप्य तत्र ताम्रमये पूर्णपात्रे काचनोङ्गे[3] अष्टादशभुजं कांचनव्यतीपात विग्रहनाममंत्रेण प्रतिष्ठाप्य पूजयेत्
तत पंचरत्नान्वितपुष्पांजलिं दद्यात् तत्रमंत्रः नमस्तेस्तु व्यतीपात सोमसूर्यस्रुतप्रभो यद्दानादिव्रतं किंचित्तदनंतमिहास्तु मे इतिद
त्वा यथाशक्ति स्रुवर्णादि दत्वा पुराणपठनादिना रात्रिं निनयेत् तद्दिने उपवासः प्रातर्देवं संपूज्य सपत्नीकं द्विजं च संपूज्य त-
त्पीठं सुवर्णसहितं तस्मै दत्वा ब्राम्हणभोजनपुरःसरं स्वयं भुजीत कुर्यादेवं मासि मासि व्यतीपातास्त्रयोदश चतुर्दशे व्यतीपाते कु-
र्यादुद्यापनं शुभम् पूर्वोक्त संकल्पांते आचरितस्य व्यतीपातव्रतस्य सांगता सिद्ध्ये तदुद्यापनाख्यं कर्म करिष्य इति संकल्प्य वृताचार्यः सर्व-
तोभद्रस्थ शर्करापूरित कलशे ताम्रमयं पूर्णपात्रं निधाय तत्र सुवर्णपद्मे अष्टादशभुजं व्यतीपान विग्रहं सौवर्णं संपूज्य पूर्ववत् पुष्पांजलिं दत्वा रा

[1] कुबेरत्वकामः [2] सुवर्णकमले [3] देहं

त्रिनिनयेत् प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानंदेवंव्यतीपातं क्षीरवृक्षसमिदाज्यपयः फलद्रव्यचतुष्टयेन प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रम्हादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततआचार्यंसंपूज्य तस्मैसोपस्करांशय्यांपीठंचदद्यात् तत्रमंत्रः वंदेव्यतीपानमहंमहांतंरवींदुसूनुं सकलेष्टसिद्ध्यै समस्तपापस्यममक्षयोऽस्तुपुण्यस्यवृद्धिर्ममसर्वदास्तु इतिरत्नत्वाशय्यादिसहितंपीठंव्रतपूर्तयेगांचदत्वा ब्राम्हणान्भोजयेदिति इतिव्यतीपातव्रतम् अथप्रकारांतरेणनारदीयपुराणोक्तं व्यतीपातव्रतम् तिथ्यादिसंकीर्त्य ममसकलपापक्षयपूर्वकंअभीष्टसिद्ध्यनंतरंविष्णुसायुज्यकामः व्यतीपातव्रतंकरिष्ये इतिसंकल्प्य व्यतीपातदिने प्रातः पंचरंगोपेत पद्मेगोक्षीरपूरितंकांस्यभाजनंसंस्थाप्य तदुपरिपूर्णपात्रंनिधायतत्रचतुर्भुजंचक्राद्यायुधोपेतं सौवर्णंपद्महस्ततलध्न्यान्वितंविष्णुंविष्णोरराटमसीतिमंत्रेण संस्थाप्यजातीपुष्पादिना पुरुषसूक्तेनसंपूज्य शर्करोपेतपायसोपहारंनिवेद्यदेवंप्रार्थयेत् व्यतीपातदिनेदेवनवसर्वंसमर्पितं भवत्वनंतफलदंममजन्मनिजन्मनि ततोद्विजंसंपूज्य तिलपूर्णशरावंसगुडंससुवर्णंदत्वासोपस्करांशय्यांपीठंगांचदत्वा ब्राम्हणान्भोजयेदिति इतिव्रतोद्यापनकौमुद्यांव्यतीपातव्रतम् अथशिवलक्षपूजाविधिः ब्रम्हांडपुराणे माघादिपुण्यमासेषु चातुर्मास्येवाश्रावणेविशेषेणचंद्रानुकूल्येशुभेदिने प्रातर्नद्यादौस्नात्वा नित्यकर्मनिर्वर्त्य देवागारंप्रविश्य तिथ्यादिसंकीर्त्य अखिलपापक्षयपूर्वकंमैहिकामुष्मिकनिरवधिसुखप्राप्तिद्वारामुकुकामनयावाउमासहितसदाशिवप्रीत्यर्थं अमुकलक्षपूजांकरिष्ये इतिसंकल्प्य पीठेशिवंसंपूज्य सहस्रनामभिः मूलमंत्रेणवातद्द्रव्येणपूजयेत् प्रत्यहंपंचामृताभिषेकः कर्पूरार्तिक्यंदध्योदनोपहारश्चप्रथमदिनेयावतीसंख्यातावतीसमाप्तिपर्यंतं अयुतांतेसुवर्णपुष्पंसमर्प्यलक्षांतेसमाप्तिदि

१ खिरणीतिप्रसिद्धस्य·

व्र॰ नैविशेषेण शिवं संपूज्य शतपलपरिमितेन पंचामृतेन स्नानं नारिकेलार्घ्यं शिवोपरि ध्वजपताकारोपणं श्वेतवस्त्रद्वयदानं च ततः पुष्पांजलित्रयमष्टभि कौ॰
६३ र्नामभिः भवाय॰ शर्वाय॰ रुद्राय॰ पशुपतये॰ उग्राय॰ महते॰ भीमाय॰ ईशानाय॰ इति दत्वा प्रार्थयेत् विरूपाक्षमहेशान विश्वरूप महेश्वर

। न पूजां गृहीत्वा वरदो भव ततो नमेत् मृत्युंजयाय यज्ञाय देवदेवाय शंभवे आश्रितेशाय सर्वाय महादेवाय ते नमः नमः शिवाय शांताय सग-
सर्वेश्वराय देवाय कारणत्रयहेतवे ततो यथाशक्ति ब्राम्हणान् भोजयेदिति व्रतपूर्त्यै गां च दद्यात् पूजाद्रव्याणि चंपकैर्मल्लिकापु
ञ्जातीकिंशुकपाटलैः द्रोणपुष्पैः कदंबैश्च बिल्वशारवादलैस्तथा नागवल्लीदलैर्वापि रत्नैर्नानाविधैरपि तत्तत्कालोद्भवैः पुष्पैः पल्लवैः कोमलैर-
पि धान्यैश्च विविधैः शन्दूररवंडैर्व्रीहितंडुलैः लक्षपूजां प्रकुर्वीत नामभिर्मूलमंत्रतः इति लक्षपूजा अथ प्रकारांतरेण शिवलक्षपूजाविधानं अग्निपु
राणे पूर्ववद्देवं संपूज्य सहस्रनामभिः ॐ नमः शिवायेति वा मंत्रेण पुष्पादिएकरूपतया समाप्ति पर्यंत समर्प्य अंते शुभदिने उद्यापनं कुर्यात्
थ्यादि संकीर्त्य मम अनेकजन्मार्जित दुरितादि निवृत्ति पूर्वक मैहिक पुत्रपौत्रादि विविधसुख प्राप्त्यनंतरं शिवलोक निवास कामनया कृतं यल्लक्ष
पूजाविधानं तत्संपूर्णफलावाप्तये तदुद्यापनाख्यं कर्म करिष्ये यदर्पितं तंदुलैरवः संकल्पे कार्यः ततो वृताचार्यः वेदिकायां लिंगतो भद्रस्थ कलशे धा
न्यपूरित पूर्णपात्रे मध्ये सौवर्णं महेशं नमः शंभवे च मयोभवे चेति मंत्रेण संस्थाप्य तद्वामभागे सौवर्णं गौरीं च गौरीर्मिमायेति मंत्रेण संस्थाप्य पुर
तो राजतं वृषभं ऋषभं मेति मंत्रेण संस्थाप्य परिवारदेवताः स्थापयेत् पूर्वादिदिक्षु अधर्मं॰ अवैराग्यं॰ अनैश्वर्यं॰ महेश्वरं॰ तद्बहिः
ान्यां ईशानवक्त्राय॰ पूर्वे तत्पुरुषाय॰ दक्षिणे अघोरवक्त्राय॰ पश्चिमे सद्योजातवक्त्राय॰ उत्तरे वामदेववक्त्राय॰ पुनः पूर्वादिषु॰ ६३

यै॰ श्रेष्ठायै॰ काल्यै॰ उन्मन्यै॰ पुनः पूर्वामारभ्यैशानीपर्यन्तं अजैकपदे॰ अहिर्बुध्न्याय॰ भवाय॰ शर्वाय॰ उमापतये॰ रुद्राय॰ पशुप
तये॰ शंभवे॰ वरदाय॰ शिवाय॰ ईश्वराय॰ पुनः पूर्वे नंदिकालौ॰ दक्षिणे भृंगिचंडौ॰ पश्चिमे वृषस्कंदौ॰ उत्तरे देशकालौ॰ तत इंद्रा-
दिलोकेशान् एवं संस्थाप्य पूजयेत् ध्यानम् शुद्धस्फटिकसंकाशं त्रिनेत्रं चंद्रशेखरं भस्मोद्धूलितसर्वांगं दद्यात्स्वं भक्तवत्सलम् स्थाप
नमंत्रेण पूजयेत् दशैकं वा सुवर्णपुष्पं समर्प्य नमः शिवायेति नमस्कारः पुराणपठनादिना रात्रिं निनयेत् प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात्
प्रधानं देवं सोमं महेशं तिलद्रव्येणायुतसंख्याकाहुतिभिः सहस्रपरिमिताभिर्वा परिवारदेवता मंडलदेवताश्च एकैकया तिलाहुत्याज्याहुत्या वा
यक्ष्ये स्थापनमंत्रेण होमः पुष्पाद्यर्पणमंत्रेण वा होमांते आचार्यं संपूज्य पीठं गोमिथुनं च प्रतिपाद्य अधिकफलप्राप्तये सोपस्करां शय्यां
च दत्वा षोडश द्विजान् विशेषसत्कारेण संपूज्य दक्षिणां च दत्वा सदन्नेन द्विजान् भोजयेत् इति प्रकारांतरेण शिवलक्षपूजाविधानं अथ वि-
ष्णुलक्षपूजाविधानम् अग्निपुराणे चातुर्मास्ये तिसंप्राप्ते लक्षपूजां समाचरेत् माघादिपुण्यमासेषु लक्षपूजा हरेः स्मृता यद्यद्दनी
भवेत्पुष्पं विष्णवे तत्तदर्पयेत् अतसीतुलसीधात्रीपद्मं दूर्वांकुरस्तथा करवीरं कर्णिकारं शतपत्रं च केतकम् चंपकं मोगरं चैव सौवीरं कन
कं तथा जातीपुष्पं पाटलं पुन्नागं च कदंबकम् बादरं चामरं पूगं फलैरन्यैश्च पूजयेत् स्रग्गंधैरृतुसंभूतैः शस्तैः पादपपल्लवैरिति य
द्यत्पूजयते पुष्पं तत्स्वरूपं हिरण्मयं कारयेच्छतकेचैकं सहस्रे वापि कारयेत् लक्षे वा दापयेद्धीमान् यथावित्तानुसारतः विष्णोर्नामसहस्रे-
ण गायत्र्या मूलमंत्रतः सहस्रं द्विसहस्रं वा त्रिसहस्रं यथाविधि उपक्रमदिने यावत्प्रत्यहं तावती भवेत् इति तिथ्यादिसंकीर्त्य अखिल

नाविधपातकशमनपूर्वकमैहिकामुष्मिकनिरतिशयानंदप्राप्तिद्वारा लक्ष्मीनारायणप्रीत्यर्थं तुलस्यादिलक्षपूजां करिष्ये इति संकल्प्य पुरुषसूक्तेन देवं संपूज्य नामभिः तुलस्याद्यर्पयेत् समाप्तौ उद्यापनं कुर्यात् पूर्वसंकल्पांते अमुकलक्षपूजोद्यापनं करिष्य इति संकल्प्य सायमाचार्यो वेदिकायां सर्वतोभद्रे ब्रम्हादिदेवतास्थापनपूर्वकं कलशं प्रतिष्ठाप्य तत्र देवं पूजयेत् तत्रायं क्रमः सर्वतोभद्रे ब्रह्मादिदेवताः संस्थाप्य तदुपरि प्रस्थतिलपुंजं तदुपरि प्रस्थगोधूमपुंजं तदुपरि प्रस्थपरिमितशुद्धतंदुलपुंजं कृत्वा तत्र कुंकुमेनाष्टदलं पद्मं विरच्य तन्मध्ये ताम्रमयं धानसहितताम्रकलशं प्रतिष्ठाप्य तत्र सौवर्णं चतुर्भुजं लक्ष्म्यालिंगितवामांगं नारायणं सहस्रशीर्षेति मंत्रेण संस्थाप्य पुरतः सौवर्णं राजतं वा गरुडं गोमिधेनीशरीरस्त्वं वाहनं परमेष्ठिनः विषपापहरो नित्यं मनःशांतिं प्रयच्छ मे इति ततः ईशान्यादिविदिक्षु शंखं चक्रं गदां पद्मं च ततः परितो लोकेशान् संस्थाप्य पूजयेत् प्रातरग्निं प्रतिष्ठाप्यान्वादध्यात् अत्र प्रधानं लक्ष्मीनारायणं ॐ नमो नारायणायेति मंत्रेण मधुलाजामिश्रितिलपायसघृतचरुद्रव्यचतुष्टयेन प्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिरष्टोत्तरशताहुतिभिर्वा तथा चतुष्टयेन अमुनाहुतिभिः सहस्रनाममंत्रैर्यक्ष्ये परिवारदेवतामंडलदेवताश्चैकैकयाज्याहुत्या यक्ष्ये तत आचार्याय पीठमनेन मंत्रेण दद्यात् जलशायी ब्रह्मपिता यद्गर्भे सचराचरम् अनंतभोगशयनः प्रीयतां मे जनार्दनः इति दत्त्वा गां पयस्विनीं च दत्त्वाधिकफलप्राप्तये सोपस्करां शय्यां च दत्त्वा दशाधिकान् द्विजान् सदन्नेन भोजयेदिति एवमेव विधानेन गणेशांबिकयोर्नृप तत्तन्मंत्रेण पूजा तु तत्तन्नामसहस्रकैः गणेशे लड्डुकैर्होमं पंचखाद्यैस्तथापि वा पायसेन तु देव्याश्च तिलैर्वा केवलैरपि एवं कृत्वा विधानेन स्वर्गलोके महीयते इति विष्णुलक्षपूजाविधानं अथ लक्षनमस्कारव्रतं भविष्ये वसिष्ठ उवाच ब्रम्हहत्यादिपापानां प्राय

१ आच्छादनं पूर्णपात्रमित्यर्थः २ सामिधेन्यः पञ्चदश ऋचः

श्चित्तं यदिच्छसि तदा लक्षनमस्कारव्रतं कुरु महीपते चातुर्मास्येति संप्राप्ते केशवे शयनं गते आषाढस्य सिते पक्षे एकादश्यां समारभेत् कार्तिकस्य
सिते पक्षे पौर्णमास्यां समापयेत् मार्गशीर्षे माघे चैत्रे वैशाखे वा पूर्णिमायां समापयेदिति तिथ्यादि संकीर्त्य ममानेकजन्मोपार्जित नानाविधपा-
तकशमनपूर्वकमतुलभोगप्राप्ति द्वारा श्रीपरमेश्वरप्रीत्यर्थं विष्णोरमुकदेवस्येति वा लक्षनमस्कारव्रतमहं करिष्ये इति संकल्प्य तुलस्यग्रे अश्वत्थ
मूले गंगातीरे गवां गोष्ठे वा अन्यत्र शुभस्थले वा यद्देवताप्रीतये व्रतं तद्देवं पीठे पुरुषसूक्तेन संपूज्य नमोस्त्वनंतायेति स्तुत्वा तद्देवतानाममंत्रेण
तत्तद्देवताप्रकाशक वैदिकमंत्रेण मूलमंत्रेण वा नमस्कारान् अष्टांगानेकरूपेण समाप्तिपर्यंतं कुर्यात् समाप्तौ उद्यापनं कुर्यात् पूर्वसंकल्पाते लक्षन-
मस्कारव्रतस्य सांगतासिद्ध्यर्थं तदुद्यापनं करिष्य इति संकल्प्य वृताचार्यः सर्वतोभद्रे कलशोपरि हैमं देवं तद्देवतानाममंत्रेण संस्थाप्य पूजयेत् वि-
शेषार्घ्यत्रयं दद्यात् देवदेव जगन्नाथ सर्वक्रतुफलप्रद व्रतेनानेन संतुष्टो गृहाणार्घ्यं मयार्पितमिति ततोग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधा
नं देवं विष्णुं अमुकं वा चरुतिलव्रीहि पलाशसमित्सर्पिर्द्रव्यैः प्रतिद्रव्यं समावृत्त्या पौरुषेण सूक्तेन यक्ष्ये ब्रम्हादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये
ततः पीठं गां च आचार्याय दत्वाष्टोत्तरशताधिक द्विजान् यथाशक्ति वा भोजयेदिति इति लक्षनमस्कारव्रतम् अथ लक्षप्रदक्षिणाविधानम् वि-
ष्णुधर्मोत्तरे आषाढशुक्लपूर्णिमायां प्रारंभः कार्तिक्यां समापनं अथवा शुभमासे वा प्रारंभसमापने सुरालयेश्वत्थमूले तुलस्यां गोव्रजेथवा
कुर्यात् प्रदक्षिणाः सर्वाः पूजयित्वा यथाविधि तिथ्यादि संकीर्त्य आत्मनोखिल पापरोगपीडानिरसनपूर्वकाभीष्टसिद्धि द्वारा श्रीपरमेश्व-
र प्रीत्यर्थं विष्णोरमुकदेवस्येति वा लक्षप्रदक्षिणाव्रतं करिष्ये इति संकल्प्य गणेशादि संपूज्य पूजासामग्रीं गृहीत्वा अश्वत्थादि समीपं गत्वा पुरु

षसूक्तेनसंपूज्यसहस्रनामादिपठन् करचालनादिरहितः एकाग्रचित्तः प्रदक्षिणाः एकरूपतयासमाप्तिपर्यंतं कुर्यात् अमुककामनयाकृताः
क्षिणास्तत्साद्गुण्यार्थंतदुद्यापनंकरिष्य इति संकल्प्य वृताचार्यः सर्वतोभद्रेकलशोपरिहैमंकृतप्रदक्षिणदेवंतन्मंत्रेणसंपूज्य साष्टांगंप्रण
मेत् ततोग्निंप्रतिष्ठाप्यान्वादध्यात् प्रधानदेवंविष्णुं विष्णुगायत्र्याष्टोत्तरशतसंख्ययाचवाज्याहुतिभिः ब्रह्मादिदेवताः एकैकयाज्याहु-
त्यायक्ष्ये ततःपीठंकपिलांगांचदत्त्वा यथाशक्तिब्राह्मणान् भोजयेत् अन्नयद्देवताप्रदक्षिणास्तद्देवताप्रकाशकोमंत्रः पूजादौ ग्राह्यः इ-
तिलक्षप्रदक्षिणाविधानं अथप्रकारांतरेणाश्वत्थप्रदक्षिणाविधिः भविष्ये संकल्पादिपूर्ववत् इयान्विशेषः आदावाराधयेद्विष्णुं-
ध्यानावाहनपूर्वकम् तथैवपिप्पलतरुंनारायणस्वरूपिणं अर्चयेत्पुरुषसूक्तेनउपचारैश्चषोडशैः ततःप्रदक्षिणाःकुर्यात् तत्सर्वंसफलंभवेत् लक्ष
कंद्विलक्षंवात्रिचतुःपंचलक्षकम् कार्यस्यगौरवाज्ज्ञेयं द्वादशांतेसमाचरेत् ब्रह्मचारीहविष्याशी त्वधःशायीजितेंद्रियः मौनी[1]
त्वापिप्पलस्यस्तुतिंपठेत् विष्णोर्नामसहस्रंचपौरुषंवैष्णवंतथा ततोलक्षदशांशेनसघृतंपायसंहुनेत् तर्पणंतद्दशांशेनभोजनंतद्दशांशतः
मादौविष्णुगायत्रीनामसहस्रंवाग्राह्यं होमांतेद्रोणपरिमिततिलपुंजोपरि पलादधिकरौप्यपीठोपरिसुवर्णादधिकंहैममश्वत्थतरुं संस्थाप्याश्वेत
वस्त्रेणसंछाद्यसंपूज्यचद्विजायदद्यात् तत्रमंत्रः पिप्पलोवृक्षराजेंद्रोत्यग्निगर्भस्त्वमेवच प्रभुर्वनस्पतीनांच पूर्वजन्मनियत्कृतम् अघौघंना
शयक्षिप्रंनववरूपप्रदानतः ततोद्विजंप्रार्थयेत् अमुंतरुंगृहाणत्वं विष्णुरूपंद्विजोत्तम स्वीकृत्यदुष्कृतंघोरंक्षिप्रंशांतिंप्रयच्छमे व्रतपूर्तयेशक्त्या
गांचदद्यादिति इत्यश्वत्थप्रदक्षिणाविधानम् इतिश्रीमच्चित्त॰ व्रतोद्यापनकौमुद्यां लक्षपूजालक्षनमस्कारलक्षप्रदक्षिणाविधानंसमाप्तम्

[1] तत्सांगतासिध्यर्थं

अथलक्षवर्तिव्रतं तत्रादावेकसूत्रवर्तिकाव्रतम् वायुपुराणे श्रावणशुक्लप्रतिपद मारभ्य कार्तिक पौर्णमासी पर्यंतं प्रत्यह मेक सहस्त्रवर्तिको द्वीप-
नं कुर्यात् अतेउद्यापनं अथवा माघे वैशाख पूर्णिमायां एतेषामभावे शुभ काले कार्यम् तिथ्यादि संकीर्त्यात्मनो रजः सपर्कादि विविध पानकस्य याग-
स्यागमन कोटिनाश वि विधैहिक पुत्रपौत्रादि सुख प्राप्ति पूर्वक विष्णुलोक प्राप्ति द्वारा श्रीपरमेश्वर प्रीत्यर्थं माचरितं यल्लक्षवर्तिव्रतं तत्संपूर्ण फला
वाप्तये तदुद्यापनाख्यकर्म करिष्ये इति संकल्प्य वृतान्वार्यः सर्वतोभद्रे कलशं प्रतिष्ठाप्य तन्मध्यदेशे इदं विष्णुरिति मंत्रेण हेमं श्रियासहितं
विष्णुं तद्दक्षिणे सावित्र्या सहितं ब्रह्माणं ब्रम्हजज्ञानमिति मंत्रेण विष्णोरुत्तरे उमासहितं शंभुं नमः शंभवे च मयोभवे चेति मंत्रेण इति देवतात्रयं सं
स्थाप्य पुरतो राजतं गरुडं प्रतिष्ठाप्य पूजयेत् चंदनानंतरमंगपूजा कालायनमः शिरः पूजयामि विष्णवे० ललाटं० वन्हये० नेत्रे० रवये० क-
र्णौ० दीसाय० नासां० निशाकराय० मुखं० रुद्राय० कंठ० शेषाय० स्कंधौ० जगद्व्यापिने० बाहू० तेजोरूपाय० स्तनौ० महेश्वराय० वक्षः० निरं
जनाय० उदरं० फलाध्यक्षाय० नाभिं० विश्वरूपिणे० कटी० जगत्प्रभवे० गुदं० स्वप्रकाशाय० ऊरू० स्वयंज्योतिषे० जानुनी० चतुर्व्यूहाय० गुल्फौ० जनाधिपा
य० पादौ० परब्रम्हणे० सर्वांगं० विशेषोपहारादि समर्थ्य रात्रिं निनयेत् प्रातः सर्तिलैर्यवैः अग्नेनयसुपथेति ऋचा इत्यादशांशतर्पणं कृत्वा तर्पणदशांशेन हो-
मं कुर्यात् तद्यथा अग्निप्रतिष्ठाप्यान्वादध्यात् प्रधानं देवं लक्ष्मीसहितं विष्णुं घृतान्वितपायसपलाशसमिद्धुतद्रव्यैः सहस्त्रसंख्याकाहुतिभिः तथा ब्रम्ह-
शंभू अष्टाविंशति तिलाहुतिभिः मंडलदेवताः एकैकयाज्याहुत्या यक्ष्ये अत्रक्रमः अग्नेनयेति ऋचा पायसं इदं विष्णुरिति मंत्रेण पलाशसमिध विष्णुप
त्न्या घृतं च हुनेत् ततः पीठस्थं देवं संपूज्य गोघृतालोडित सहस्त्रवर्तिभिः आरार्तिक्यं कृत्वा ततः आचार्यं संपूज्य पीठं घृतपूरित त्रिंशत्पल परिमि-

तंकांस्यपात्रंयथाशक्तिवातथासुवर्णवर्तिसंयुक्तरौप्यमणीतांचदद्यात् तत्रमंत्रः शैप्यपात्रस्थितंदीपंहेमवर्तिसमन्वितम् कांस्यपात्रेणस
हितंददामिव्रतपूर्तये ततोगांचदत्वादशाधिकान् द्विजान् सदन्नेनसंतर्पयेदिति एवमेवमाणिक्यलक्षवर्तिव्रतम् पूर्वोक्तेनविधानेनकुर्या-
त्सर्वमतंद्रितइति इत्येकसूत्रवर्तिमाणिक्यलक्षवर्तिव्रतम् अथरुद्रवर्तिव्रतं स्कांदे तिथ्यादिसंकीर्त्य ममाखिलदुरितनाशाभीष्टसिद्धिपू
२ द्वारासांबसदाशिवप्रीत्यर्थं आचरितरुद्रलक्षवर्तिव्रतस्योद्यापनकरिष्ये इतिसंकल्प्य वृताचार्यः लिंगतोभद्रेताम्रकलशो
हैमसांबंरुद्रं कद्रुद्रायेतिमंत्रेणप्रतिष्ठाप्य पुरतोवृषभंचसंपूज्य पुराणपठनादिनारात्रिंनिनयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् प्रधानं
देवंसांबंरुद्रंरुद्रसूक्तेन ॐ नमःशिवायेतिमंत्रेणवाघृतपायसबिल्वद्रव्यैः सहस्राहुतिभिः मंडलदेवताश्चैकैक याज्याहुत्यायक्ष्ये ततःपीठं
गांचदीपंचदत्वा एकादशाधिकान् द्विजान् भोजयेदिति अत्रवर्तिदशांशतस्तर्पणं तद्दशांशतोहवनं तद्दशांशतोद्विजभोजनम् प्रतिपदोक्तं-
नास्ति होमदशांशतः साधारणंतर्पणं कांस्यपात्रसहितंदीपदानंच पूर्ववत् कर्तव्यं एवमेवस्कांदभविष्ययोर्बिल्वलक्षवर्तिव्रतोद्यापनमुक्तम्
रुद्रलक्षवर्तिवत्सर्वमनुष्ठानंज्ञेयम् इतिरुद्रबिल्वलक्षवर्तिव्रतोद्यापनम् अथकर्पूरलक्षदीपदानमुक्तम् शैवागमे तिथ्यादिसंकीर्त्य
ममाखिलपापक्षयपूर्वक शिवलोककामनयाचरितलक्षकर्पूरदीपसांगतासिद्ध्यर्थं तदुद्यापनंकरिष्ये इतिसंकल्प्य वृताचार्यः सर्वतोभद्र
स्थकलशेसांबं भवंनमो भवायचरुद्रायचेतिमंत्रेणसंस्थाप्यपूजयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं भवंसहस्रतिलाहुतिभि
मंडलदेवताश्चैकैक याज्याहुत्यायक्ष्ये ततःपीठं गांचदत्वा द्विजान् भोजयेत् होममंत्रः स्थापनोक्तः इतिकर्पूरलक्षदीपविधानं

१ आवश्यकत्वेनोक्तं

अथलक्षदीपविधानम् विष्णुधर्मोत्तरे पंचायतनदेवानामाराध्यस्यैववायतः चातुर्मास्येतुसंप्राप्तेशुभेवामासिभूमिप प्रत्येकंचैकदीपंचदीपितंगोघृ-
तेनच तिलतैलेनवाकुर्यात्कर्पूरेणसमन्वितम् दीपंप्रज्वाल्यविधिवद्वर्त्याकार्पाससंभुवा एकसूत्र्यात्रिवर्त्यावाबिल्वमाणिक्यसंज्ञया एवंप्र-
कारेणलक्षदीपदानम् देवाग्रेकृत्वाकार्तिकपूर्णिमायामुद्यापनंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्यास्मनोविविधपापक्षयपूर्वकमभीष्टकामसि
द्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंमयाचरितलक्षदीपदानसांगतासिद्ध्यै तदुद्यापनंकरिष्ये वृताचार्यः सर्वतोभद्रस्थकलशेहैमंदेवंतन्मंत्रेणसं-
स्थाप्यसंपूज्यरात्रौजागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं पूज्यदेवंघृताक्ततिलद्रव्येणसहस्राहुतिभिर्मंडलदेवताश्चैकै
कयाज्याहुत्यायक्ष्ये ततःपीठंसुवर्णवर्तिसंयुक्तंरौप्यदीपंघृतपूरितकांस्यपात्रसहितं ब्राम्हणाय दत्वा गांच प्रतिपाद्य द्विजान्भोजये
त् इतिश्रीमच्चित्तपावन० व्रतोद्यापनकौमुद्यांचतुर्विधलक्षवर्तिव्रतोद्यापनंकर्पूरदीपलक्षविधानंपृथग्पृथग्लक्षदीपविधानंचस
मासम् अथपार्थिवलिंगोद्यापनम् लैंगेरुद्रयामले भविष्येशैवागमेचोक्तम् तत्रविधिः सहस्रंवाथलक्षंवाकोटिंवाथविधानतः
लिंगानांपूजयित्वातुसर्वान्कामानवाप्नुयात् मल्लिंगपार्थिवंश्लक्ष्णंभुक्तिमुक्तिकरंपरम् त्रिसंध्यंयोर्चयेल्लिंगंकृत्वाबिल्वेनपार्थिव एकादश
शतंवापिसर्वाभीष्टमवाप्नुयात् शुद्धप्रदेशसंभूतांमृदमाहृत्य यत्नतः शुद्धेनवारिणाभ्युक्ष्यसंघट्य पुनःपुनः लिंगानांसंख्ययाकु
र्यात् पृथकुपिंडान्यथाक्रमम् पलद्वयान्नकर्तव्यंन्यूनंलिंगंसदैवहि अखंडंतुचरंलिंगंद्विखंडंस्थावरंस्मृतम् लिंगमादौविधायाथपी
ठिकांरचयेत्ततः पक्वजंबूफलाकारंलिंगंकुर्यान्मनोरमम् वर्तुलंचतुरस्रंवासमंपीठद्वयंशुभम् दर्शनाद्देवलिंगस्यदेवगंधर्वदानवाः तत्क्षणं

पूजयंत्याश्रु रचितंनैवसंशयः साक्षतंस्थापयेत्तस्मान्निर्माणक्षणएवतत् पूजास्थानंस्कांदे पाषाणदारुजेदेशेदर्भांतरितसंस्थले पुष्पप्रकार
संकीर्णेपाणौवावेदिकेभुवि सबिल्वताम्रपात्रेवास्थापितंपार्थिवंशिवम् मृल्लिप्तहस्तएवाशु संक्षालितकरेथवा पंचाष्टषोडशप्रोक्ताद्वा-
त्रिंशदुपचारकाः यस्तुपूजयतेभक्त्यालिंगंत्रिभुवनेश्वरम् सस्वर्गराज्यमोक्षाणांक्षिप्रंभवतिभाजनम् आदौकृत्वागणेशंच लिंगंकुर्यात्त-
तःपरम् पश्चाच्छक्तिंततःस्कंदंततोलिंगानिचार्चयेत् हरोमहेश्वरः शंभुःशूलपाणिःपिनाकधृक् शिवःपशुपतिश्चैवमहादेवइतिक्रमा
त् मृदानयनसंघट्ट प्रतिष्ठाह्वानमेवच स्नपनंपूजनंचैवक्षमस्वेति विसर्जनम् अथकामनापरत्वेनैकादशप्रकाराः तदुक्तंपार्थिवचिं
तामणौ ऋणमोचनकामएकशतदिनपर्यंतं प्रत्यहमेकं लिंगंकृत्वा बृहतीपुष्पं घृतनैवेद्यं अनृणाअस्मिन्निति ऋचंअष्टोत्तरशतंजपे
त् ऋणान्मुक्तोभवति १ पुत्रकामस्तु द्विशतदिनपर्यंतंप्रत्यहं लिंगद्वयंपंचामृताभिषेकः मल्लिकापुष्पंगुडोदनं नैवेद्यं कांडात्कांडात्प्ररोहंती-
अष्टोत्तरशतंजपः याशतेनप्रतनोषीत्यनेनाष्टोत्तरशतदूर्वार्पणं पुत्रोभवति २ कन्याकामस्तुत्रिशतदिनं प्रत्यहंलिंगत्रयं करवीरपुष्पं शर्क
रा वेद्यं पावीरवीकन्येतिमंत्रेणाष्टोत्तरशतंजपेत् याशतेनेत्याष्टोत्तरशतदूर्वार्पणंकन्याभवति ३ द्रव्यकामस्तु चतुःशतदिनपर्यंतं प्रत्य
हंचत्वारिलिंगानिकृत्वा किंशुकपुष्पं कदलीफलनैवेद्यं श्रीसूक्तंदशवारं प्रत्यहंपठेत् द्रव्यागमोभवति ४ विवाहकामः प्रत्यहंपंचलिंगानि
पंचशतदिनपर्यंतंकृत्वा चंपकपुष्पं पायसनैवेद्यं गौरीर्मिमायेतिऋचंअष्टोत्तरशतंजपेत् ५ कलहनिवृत्तिकामः त्रिशद्दिनपर्यंतंप्रत्यहंष-
ड्लिंगानि बकुलपुष्पंमधुनैवेद्यं मुंचामित्वेतिसूक्तंदशधाजपेत् ६ तीर्थयात्राकामः पंचाशद्दिनपर्यंतंप्रत्यहंसप्तलिंगानि शतपत्रपुष्पं द-

ध्योदननैवेद्यं रुद्रैकादशनीजपः ७ विद्याकामः त्रिशद्दिनपर्यंतं प्रत्यहमष्टौलिंगानि बिल्वपत्रं लड्डुकनैवेद्यं यश्छंदसामृषभोविश्वरूप
इत्यनुवाकंदशधाजपेत् ८ अपमृत्युहरणकामः एकशतदिनपर्यंतंप्रत्यहंनवलिंगानि धत्तूरपुष्पं दध्योदननैवेद्यं त्र्यंबकमितिमंत्रं आ-
यंते प्रणवंअष्टोत्तरसहस्त्रंजपेत् ९ दूरगतस्वत्हदागमनकामः संवत्सरमेकंप्रत्यहंदशलिंगानि कांचनोद्भवंपुष्पम् अपूपनैवेद्यं योरुद्रोअग्ना
विति अष्टोत्तरशतंजपेत् १० सर्वदारिद्र्यनिहन्तिकामः षण्मासंप्रत्यहमेकादशलिंगानि रक्ताब्जंद्रोणपुष्पं सर्वान्ननैवेद्यं गोघृताक्तं
नमोहिरण्यबाहवइतिमंत्रमष्टोत्तरशतजपेत् ११ इत्येकादशप्रकाराः कारागृहमोचनेविशेषः कारागृहमोक्षकामोएकविंशतिदिनपर्यंतं
एकोत्तरवृद्ध्यालिंगानिकृत्वा द्वाविंशतिदिनमारभ्य पुनरेकैकह्रासेन लिंगानिकृत्वा यावल्लिंगानिभवंति तावत्प्रत्यहंरुद्रैकादशिन्याभिषेकः
पलाशपुष्पं दधिघृतमधुमिश्रान्ननैवेद्यम् अष्टसहस्त्रंत्वरितरुद्रंजपेत् निगडान्मुक्तोभवति लिंगसंख्यया फलभेदमाह एकंपापहरं
लिंगं द्विलिंगंश्रीकरं त्रिलिंगंसर्वकामदं विद्याकामेसहस्त्रं स्त्रीकामेपञ्चशतं पुत्रकामेपञ्चदशायुतानि कन्याकामेयुतत्रयं भूकामेसहस्त्रं
रूपकामेत्रिसहस्त्रं राज्यकामेलक्षं मारणेसप्तसहस्त्रं उच्चाटनेपंचसहस्त्रं स्तंभनेत्रिसहस्त्रम् जारणेद्विसहस्त्रं कारागृहमोचनेयु-
तम् निगडमोचनेसार्धमयुतं डाकिन्यादिभयेपंचशतं राज्यभयेअयुतम् दारिद्र्यमोचनेपंचसहस्त्रम् सर्वकामेसप्तायुतानि मोक्ष
कामेलक्षम् परमसायुज्यकामेकोटिः सौवर्णलिंगंसौभाग्यकरम् राजतंयशस्करम् ताम्रमयंपुष्टिकरं कांस्यमयंकीर्तिकरम् लो
हमयंशत्रुमारणकरम् सीसमयमायुःकरम् पाषाणमयंपुण्यकरं काश्मीरंश्रीकरं मारकतंशांतिकरं स्फाटिकंबहुस्वामित्वकरं

इंद्रनीलमयं पोषणकरम् मुक्तामयं श्रेयस्करं पारदं सर्वसिद्धिकरं चंदनजं ज्वरनाशकरं कर्पूरजं शांतिकरं गोमयजं सर्वरोगहरम् भ-
स्मोद्भवं मोक्षकरं हारिद्रं प्रीतिविवर्धनम् कस्तूरीभवं रुग्गंधकरं नवनीतजं कीर्तिकरं दधिजं लक्ष्मीकरं दुग्धजं सुखकरं शर्करोत्थं पुत्रकरं
लवणोत्थं सर्वजनवशकरम् कृष्णतिलोद्भवं शिवलोकप्रदं उक्तेष्वेतेषु लिंगेषु पार्थिवं क्षिप्रसिद्धिदं कृते माणिमयं लिंगं त्रेतायां हेमसंभवं
द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे इति अथारंभकालः शैवागमे कार्तिके मार्गशीर्षे वा माघे वैशाखसंज्ञिते श्रावणे बहुले पक्षे व्र-
ताचरणं भवेत् स्थलविशेषमाह पुण्यारण्ये नदीतीरे पर्वताग्रे शिवालये श्रीवृक्षाश्वत्थतुलसीधात्रीछायायुते वने गोष्ठे गृहे वा देवाग्नि
सूर्यगोविप्रसंनिधौ शिवपूजाविधातव्या पूर्वं पूर्वं महाफलम् समापनकालमाह कार्तिकादिशुभे मासे लिंगानां च समापनम् चतुर्द
शीदर्शयुता अष्टमीनवमीयुता समाप्तिस्तत्र कर्तव्या रोहिणीयुक्ते पुनर्वसौ अन्येष्वपि च कालेषु शुभेषु च समापनम् अथोद्यापनप्रयोगः
तिथ्यादिसंकीर्त्यामुककामनामुद्दिश्य कृतानां पार्थिवलिंगानां संपूर्णफलावाप्तये तदुद्यापनं करिष्य इति संकल्प्य पुण्याहवाचना
दि विधाय कृताचार्यः सर्षपादिना भूतान्युत्सार्य द्वारपूजां कुर्यात् चतुर्द्वारोपशोभितमंडपस्येशानभागे स्थित्वा सदाशिवमंड-
पायनमः प्राग्द्वारपार्श्वयोः नंदिनेनमः महाकालायनमः चिच्छक्त्यैनमः मायाशक्त्यै॰ द्वारश्रियै॰ वास्तुपुरुषाय॰ दक्षिण-
द्वारपार्श्वयोः गणेशायन॰ वृषभाय॰ चिच्छक्त्यादि पूर्ववत् पश्चिमद्वारपार्श्वयोः भृंगिणे॰ स्कंदाय॰ शक्त्यादि पूर्ववत् उत्तर
द्वारपार्श्वयोः रिटिने॰ चंडीश्वराय॰ शक्त्यादि पूर्ववत् ततः पश्चिमद्वारेण प्रविश्य वेदीपश्चिमतः उपविश्य लिंगतो भद्रे ब्रम्हादि देवता

स्थापन पूर्वक कलशं प्रतिष्ठाप्य तदुपरि देवं स्थापयेत् तत्रादौ न्यास कुर्यात् ललाटे॰ शिवाय नमः कंठे॰ रुद्राय॰ नाभौ ईशानाय॰ जान्वोः
शंकराय॰ पादयोः सदाशिवाय॰ ततः अश्मन्नूर्जमित्यनुवाकेन पयो धारया लिंगस्याग्न्युत्तारणं कुर्यात् लिंगप्रमाणात्तु प्रत्यहं यावन्मानं मृल्लि
ंगं क्रियते तावन्मानं तदर्धं तदर्धं वा सौवर्णं राजतं वा कुर्यात् ततः प्राणप्रतिष्ठां कुर्यात् पंचामृताभिषेकं च कृत्वा ततः कलशेन नमः शंभवे च मयोभवे च
नमः शंकराय च मयस्कराय चेति मंत्रेण पंचाक्षरेण वा लिंगं संस्थाप्य तद्वामभागे गौरीं निर्मायेति ॐ नमो भगवत्यै उमादेव्यै शिवप्रियायै नम इत्यागमम-
न्त्रेण वा हैमीं गौरीं प्रतिष्ठाप्य दक्षिणभागे तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि तन्नो दंतिः प्रचोदयादिति हैमं गणेशं तद्दक्षिणे तत्पुरुषाय विद्महे म
हासेनाय धीमहि तन्नः षण्मुखः प्रचोदयात् इति हैमस्कंदं पुरतो राजतं वृषभं वृषभं मे निमंत्रेण संस्थाप्य परितो लोकेशान् प्रतिष्ठाप्य पूजयेत्
ध्यान मंगलायतनं देवं भवं कांतमनोरमम् ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया सहस्राणि सहस्रश इति ध्यात्वा ॐ नमो भगवते रुद्रा-
येति लिंगोपरि अक्षतान्क्षिपेत् नमस्ताराये त्यासनं नमः शंभव इति पाद्यं॰ नमः शंकरायेत्यर्घ्यं नमः शिवायेत्याचमनीय नमस्तीर्थ्यायेति
रुद्रसूक्तैश्च स्नानं भवं देवं तर्पयामि शर्वं॰ रुद्रं॰ पशुपतिं॰ उग्रं॰ महांतं॰ भीमं॰ ईशानं॰ मानस्तोक इति वस्त्रं॰ नमो हिरण्यबाहव इत्युपवीतं॰
नमो वृन्द्धायेति भूषणं॰ नमः श्वभ्य इति गंधं॰ नमः सोमायेत्यक्षतान्॰ नमः पार्याय चेति पुष्पं॰ नमः कपर्दिने चेति धूपं॰ नम आशवे चेति दीपं॰
नमो बभ्लुशाय चेति नैवेद्यं॰ नमः पर्ण्याय चेति तांबूलं॰ नमो दुंदुभ्याय चेति दक्षिणां॰ नमइरिण्याय चेत्यार्तिक्यं॰ ततो लिंगोपरि नमः शर्वा
य च पशुपतये चेत्यारभ्य नमो वृहते च वर्षीयसे चेत्यंतेन पुष्पांजलिः एषते रुद्र इति प्रदक्षिणा नमो रुद्रेभ्य इति नमस्कारः ततः स्तोत्रं पठेत्

नमः ॐकाररूपाय नमोक्षरवपुर्धृते नमोनादात्मने तुभ्यं नमो बिंदुकलात्मने अलिंगलिंगरूपाय रूपातीतायते नमः त्वंमाता सर्वलोकानां
त्वमेव जगतः पिता त्वंभ्राता त्वंसुहृन्मित्रं त्वंपिता त्वंपितामहः नमस्ते भगवन् रुद्र भास्कराभिततेजसे १ नमो भवाय देवाय उमयासहि
तायच सर्वाय क्षितिरूपाय सदासुरभिणे नमः पशूनां पतये चैव कामिने मिततेजसे भीमाय व्योमरूपाय शब्दरूपायते नमः महादेवा
य सोमाय अमृताय नमोनमः उग्राय यजमानाय नमस्ते कर्मयोगिने इति स्तुत्वा क्षमापयेत् ॐ अंगहीनं क्रियाहीनं विधिहीनं महेश्वर पूजि
तोसि मया देव तत्क्षमस्व जगत्पते इति क्षमाप्य पुराणपठनादिना रात्रिं निनयेत् रात्रौ प्रदोषे प्रारंभः तद्दिने उपोषणं प्रातरग्निप्रतिष्ठाप्यान्वाद
ध्यात् अन्नप्रधानम् सोमं शिवं कृतलिंगाद्द्वादशांशेन शतांशेन वा पायसमधुशर्कराज्य तिलाक्षत बिल्वपत्र शतपत्र द्रव्याष्टकेन केवल पायसेन
वा नमः शंभवे चेति मंत्रेण पंचाक्षरेण वा यक्ष्ये तथा गौरीं षण्मुखं गणेशं च उक्तद्रव्यैः प्रतिद्रव्यं दशदशाहुतिभिः वृषभं लोकेशान् ब्रम्हादिदेवता
श्च दशदशतिलाहुतिभिः द्वारदेवताश्चैकैकयाज्याहुत्या यक्ष्ये शेषेण स्विष्टकृतमित्यादि होमशेषं समाप्य पूर्णाहुत्यादि कर्मशेषं समापयेत्
ततो होमदशांशेन तर्पणम् तद्दशांशेन मार्जनं कृत्वा विशेषोपचारैः पीठस्थं देवं शिवं संपूज्य आचार्यं च संपूज्य पीठं दद्यात् तत्र मंत्रः
पीठं गृहाण भूदेव शिव शक्त्यादिसंयुतम् वांछितार्थप्रयच्छाशु देहि मे व्रतजं फलमिति ततो व्रतपूर्तये गां च दत्वा मार्जनदशांशतो यथाश
क्ति वा सदन्नेन ब्राम्हणान् संतर्प्य व्रतपूर्णतां वाचयित्वा शिष्टो गृही त्वाइष्टजनैः सह भुंजीत अत्र त्रैवर्णिकानामेवाधिकारः स्त्रीशूद्राणां तु ६९
पूजयैवोद्यापनसिद्धिरिति लैंगात् इति शैवागमोक्त पार्थिवलिंगोद्यापनम् अथ पार्थिवगणेशोद्यापनम् रुद्रयामले महादेव उवाच

यथापार्थिवलिंगंतुसर्वसिद्धिविधायकम् तथाविघ्नेश्वरं देवं पार्थिवंसर्वकामदम् निर्विघ्नंजायतेकार्यंसर्वांसिद्धिंपुमान्लभेत् षट्कर्माणि तथान्वक्षेशृणुष्वैकमनाभव रक्तोपचारैःसिंदूरैरक्तमाल्यांबरैस्तथा जपापुष्पैःकारवीरैःकुसुमैःक्षीरपायसैः संपूज्यवश्यतामेति यंयंचिंतयतेनरः शुक्लमाल्यैःशुक्लवस्त्रैरोदनैर्दधिमिश्रितैः मालतीकुसुमैर्धूपैर्दशांगैःशांतिलब्धये कवितायाःपटुत्वंचजायतेनात्रसंशयः मोहनेमधुभिःस्नाप्यमधुपायसमर्पयेत् असितैःकुसुमैःपूज्योदमनेनासितोगुरुम् समारोप्यार्चयेद्भक्त्यात्रैलोक्यंमोहयेत्क्षणात् स्तंभनेनिशयायुक्तैरुपचारैःसमर्चयेत् आढकीभक्तनैवेद्यैःश्वेतदूर्वाभिरेवच कारयेन्निंबजरसंधूपंशत्रोस्तुनद्भवेत् मारणेमाहिषेचर्मण्यास्थायासितकंबलम् धत्तूरैरर्चयेत्पुष्पैःसर्षपाक्षतमिश्रितैः नैवेद्यंगुडसंमिश्रंमाहिषंक्षीरसंयुतम् भक्तंशाल्युद्भवंदेयंछागमांससमन्वितम् अभिषेकस्तुतैलेनमहागणपतेर्भवेत् धूपःस्मशानजतरोःपुष्पैःसद्यःसमर्चयेत् एवंगणाधिपंकृत्वापूजयेत्पार्थिवंनरः यंयंकाममभिध्यायेत्तंतंसद्यःसमाप्नुयात् पाद्मेविशेषः सहस्रदशसाहस्रलक्षंकोटिंतथैवचः यःकरोतिगणेशानांपार्थिवानांनरोत्तमः सर्वसिद्धिमवाप्नोतिनात्रकार्याविचारणा कारागृहमोचनकामः एकविंशतिदिनपर्यंतमेकोत्तरवृद्ध्यापार्थिवगणेशान्कृत्वा वक्ष्यमाणप्रकारेणसंपूज्यपुनःद्वाविंशतिदिनमारभ्यैकैकह्रासेनप्रथमदिनपर्यंतंगणेशान्कृत्वा यावद्गणेशाभवंति तावत्प्रत्यहंगणेशाथर्वशिरसाभिषेकः मूलमंत्रस्यापितावत्सहस्रजपः अभीष्टसिद्धिर्भवति एकविंशतिपुष्पाणि दाडिमीचजटामांसीबदरीनागचंपकः बृहतीचतथापाचीभृंगराजस्तथैवच मालतीकुसुमैश्चैवतुलसीमाधवीतथा करवीरंदमनकंकमलंकुमुदंतथा अन

१कथयामि २कृष्णागुरुंसंयोज्येत्यर्थः ३हरिद्रया ४खिच्चिडिकानैवेद्यैरित्यर्थः

सींचतथा कुंदं दूर्वाश्वेतांशमींतथा पारिजातंजपापुष्पंबंधूकंचैकविंशतिः पुष्पाभावेपत्रंग्राह्यं अपूपंशर्करामिश्रंनैवेद्यंकदलीफलम्
नारिकेलंचसिंदूरंदूर्वांगुग्गुलधूपकः इदंप्रत्यहंसाधारणम् अथसर्वसाधारणपूजोच्यते अभीष्टसिद्ध्यर्थंपार्थिवगणपतिपूजांकरिष्ये अ
श्वत्थमूलजांतुलसीमूलजांशक्रस्थलजांवामृदमानीयपृथ्वित्वयाधृतालोकाइतिधरांप्रार्थयित्वा ॐ गंगणपतयेनमः मृदाहरणम् ॐ गींग-
णपतयेनमः सेचनम् ॐ गूं हेरंबायनमः संयोजनम् ॐ गैं धरणीधराय० ॐ गौं क्षिप्रप्रसादनाय० चतुर्भुजां एकदंतां सुंदरां मूर्तिंकृत्वाॐ
गः सर्वसिद्धिप्रदायकाय० मस्तकोपरिरक्ताक्षतान् दत्वात्हृदिस्थंदेवंमानसोपचारैः संपूज्यनासारंध्रेणांजलिस्थसाक्षतपुष्पैः संयोज्यदेवम
स्तके अक्षतपुष्पादिनिधायप्राणप्रतिष्ठांकुर्यात् ततः स्ववामभागेकलशंसंस्थाप्यदेवंध्यायेत् तत्रादौस्वशरीरेदेवेचन्यासंकुर्यात् ॐ गां
गींगूंगैंगौंगः षडंगंकृत्वामूलमंत्रेणषडंगंकुर्यात् तद्यथा अस्यश्रीमहागणपतिमंत्रस्यगणकऋषिः निचृद्गायत्रीछंदः गणपतिर्दे
वतागंबीजं ॐ शक्तिः स्वाहाकीलकंन्यासादौविनियोगः ॐ नमोहेरंबमदमोदितममसंकष्टान्निवारयस्वाहाएवंषडंगंन्यासंकृत्वाध्यायेत्
रक्तोरक्तांगरागांशुककुसुमयुतस्तुंदिलश्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणोबीजपूराप्तनासः हस्ताग्राक्लृप्तपाशांकुशरदवरदोना
गवक्त्रोहिभूषोदेवः पद्मासनोनोभवतुसुरनुतोभूतयेविघ्नराजः इतिध्यात्वा मूलमंत्रेणनाममंत्रेणचपूजयेत् ॐ गणंजयायनमः
आवाहनं० गणपतये० आसनं० हेरंबाय० पाद्यं० धरणीधराय० अर्घ्यं० महागणपतये० मधुपर्कं० यक्षेश्वराय० आचमनीयं० क्षिप्र-
प्रसादाय० मलापकर्षस्नानं० अमोघसिद्धये० पंचामृतस्नानं० अमृताय० शुद्धोदकस्नानं० रुद्रेणगाणपत्येनसूक्तेनाथर्वशिरसावामहाभि

पेकः मन्त्राय० वस्त्रं चिंतामणये० उपवीतं० विधये० गंधं० स्कमंगलाय० रक्ताक्षतान्० बीजाय० पुष्पं० आकाशपूरकाय० स्कगंधिद्रव्यं० वरदाय०
दीपं० शिवाय० महानैवेद्यं० काश्यपाय० तांबूलं० नंदनाय० दक्षिणां० वाचासिद्धाय० फलं० ढौंढिविनायकाय० नीराजनं० सर्वसंकष्टनाशनाय०
मंत्रपुष्पं० कुमारगुरवे० प्रदक्षिणा० अघनाशिने० नमस्कारं० एवंचतुर्विंशत्युपचारान्समर्प्य ततोगणंजयादारभ्य ढौंढिविनायकांतैः एकविंशति
नामभिः एकविंशतिश्वेतदूर्वांकुरान् अभावे अन्यान् समर्प्य मूलमंत्रमष्टोत्तरशतंजप्त्वा विशेषार्घ्यंदत्वाक्षमापयेत् अंगहीनंक्रियाहीनंभक्तिहीनंगणाधिप पूजितोसियथादेवतत्क्षमस्वजगत्पते इतिशैवागमोक्तः पूजाविधिः एवंप्रकारेणसहस्रमयुतंलक्षंकोटिंवापार्थिवान्कृत्वांते माघादिशुभकाले उद्यापनंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्यऽमुककामनयाकृतानां पार्थिवगणेशानां संपूर्णफलावाप्तये तदुद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यश्चतुर्द्वारोपशोभितमंडपांतर्वेदिकायांसर्वतोभद्रे ब्रह्मादिदेवतास्थापनपूर्वकं कलशंप्रतिष्ठाप्य तत्रदेवंस्थापयेत् तत्रादौ पूर्वोक्तान् न्यासान्कृत्वा अग्नआयूंषिपवस्वेत्यनुवाकेन पयोधारयाप्रतिमाया अग्न्युत्तारणंकुर्यात् प्रतिमाप्रमाणंतु प्रत्यहंयावन्मानोमृद्गणेशःक्रियते तावन्मानेन तदर्धेनवासौवर्णंराजतंवादेवंकुर्यात् ततः प्रतिष्ठांकृत्वामूलमंत्रेण गणानांत्वेतिवाप्रतिष्ठाप्याऽऽवरणानिपूजयेत् पूर्वादिक्रमेण वक्रतुंडाय० एकदंष्ट्राय० गजाननाय० महोदराय० विकटाय० विघ्नराजाय० धूम्रवर्णाय० हेरंबाय० ततोबाह्ये पूर्वादि ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० वैनायक्यै० ततोलोकेशानावाह्य पूर्वोक्तपूजाप्रकारेण पूजयेत् पुष्पोत्तरमंगपूजा गणनाथाय० पादौपूज० गणेशाय० जानुनी० गणंजयाय० ऊरू० गणक्रीडाय० कटिं० वक्रतुंडाय० हृदयंपू० लंबोद

राय॰ कंठं॰ गजाननाय॰ स्कंधौ॰ हेरंबाय॰ हस्तौ॰ विकटाय॰ आस्यं॰ विघ्नराजाय॰ नेत्रे॰ धूम्रवर्णाय॰ शिरः पू॰ सर्वसिद्धिप्रदायकाय॰ सर्वांगं॰
एवंसंपूज्यस्तोत्रैः स्तुत्वा पुराणपठनादिनारात्रिंनिनयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् प्रधानंदेवंमहागणपतिं पायसतिलाज्यमोदकरक्ताक्ष-
तपंचखाद्यशमीदूर्वाद्रव्याष्टकेन तिलपायसेनवाकृतगणेशदशांशेनवायक्ष्ये आवरणदेवतामंडलदेवताश्च दशदशतिलाहुतिभिर्यक्ष्ये एवंहोमं-
संपाद्यदेवंसंपूजयेत् होममंत्रास्तु आतूनइंद्रइति गणानांत्वेतिमूलमंत्रोवा ततोहोमदशांशेनतर्पणम् तद्दशांशेनमार्जनम् कृत्वाततआचार्यंसंपू
ज्य पीठंनिवेद्य गांचदत्वा एकविंशतिब्राम्हणान् संपूज्य पक्वान्नपरिपूरितकलशंवस्त्रयुग्मसहितंसदक्षिणंतेभ्यः प्रत्येकं पूर्वोक्तैरेकविंशतिनाम-
भिः पुष्पांजलीन्दत्वा मार्जनदशांशतो ब्राम्हणभोजनसंकल्पंकृत्वा भूयसींदत्वासदन्नेन द्विजान्संतर्प्य व्रतपूर्णतांवाचयित्वा ऽशिषोगृहीत्वा
इष्टजनैः सह भुंजीत अयमुद्यापनप्रकारोरुद्रयामलोक्तः इतिश्रीमच्चित्तपावन॰ व्रतोद्यापनकौमुद्यां पार्थिव गणेशोद्यापनं समाप्त-
म् अथतुलसीविवाहविधिः विष्णुयामले आदावेवाथतुलसींवनेवास्वगृहेपिवा माससमात्रेणसंवर्ध्यततोयजनमारभेत् सौम्याय-
नेप्रकर्तव्यं गुरुशुक्रोदयेतथा अथवाकार्तिकेमासिभीष्मपंचदिनेपिवा वैवाहिकेषुऋक्षेषु पूर्णिमायांविशेषतः मंडपंकारयेत्तत्र कुंडवेदीं-
विवाहवत् ब्राम्हणंदेशिकंचैव चतुरश्चतथर्त्विजः गृहयज्ञंपुरस्कृत्य मातृणांयजनंतथा कृत्वानांदीमुखश्राद्धं सौवर्णंस्थापयेद्धरिम् कृ
त्वातुरोप्यतुलसींलग्नेत्वस्तमितेरवौ गोधूलिकलग्नेइत्यर्थः संपूज्यालंकृतांतांच प्रदद्याद्धिधिनाहरेः हरयेइत्यर्थः समभुनेतिमंत्रेण
वस्त्रयुग्मेनवेष्टयेत् यदाबध्नंतिमंत्रेणकंकणंपाणिपल्लवे आजंददातिमंत्रेणकरग्रहोविधीयते कर्तव्यश्चततोहोमो विशेषाद्धि-

पूर्वकम् आचार्योवेदिकाकुंडे जुहुयाच्चनवाहुतीः ॐ नमो भगवते वासुदेवाय स्वाहा ॐ नमो नारायणस्वाहेति वायजमानः सपत्नीकः सहा-
मात्यैश्च गोत्रजैः प्रदक्षिणाः प्रकुर्वीत चतस्रो विष्णुनासह विष्णुसहिततुलस्या इत्यर्थः पठेयुः शांतिकाध्याय तथा वैष्णवसंस्तवान् गायंतु-
मंगलनार्यो भेरीतूर्यादिनिःस्वनैः गापीठंच तथा शय्यामाचार्याय निवेदयेत् ऋत्विग्भ्यो दक्षिणां दद्यात्सदन्नैर्भोजयेद्द्विजान् एवं प्रतिष्ठितां दे-
वीं विष्णवे यः समर्पयेत् आजन्मार्जितात्पापान्मुच्यते नात्र संशयः अथ प्रयोगः तिथ्यादि संकीर्त्य ममाखिल विविध पातक शमनपूर्वकमभीष्ट
सिद्धिद्वारा श्रीमहाविष्णुप्रीत्यर्थं तुलसीविवाहं करिष्ये इति संकल्प्य तदंगं स्वस्तिवाचनादि ग्रहयज्ञं च कृत्वा एवमाचार्यमृत्विजो वृत्वा तुलस्या आल
वालं परितो मंडपं च कृत्वा विवाहवत्तत्र तुलसीपुरतो वेदीं कृत्वा तुलस्या हरिद्रारोपणादि कृत्वा वेधां सर्वतो भद्रे हैमं विष्णुं इदं विष्णुरिति मंत्रेण रौप्यमयीं
तुलसीं च तुलसि श्री सखि शुभे पापहारिणि पुण्यदे नमस्ते नारदनुते नारायणमनः प्रिये इति संस्थाप्य संपूज्य वस्त्रभूषणादिना भूषयित्वा गोधु
लिलग्ने मध्ये अंतःपटं धृत्वा विवाहवत्सर्वमंगलाष्टकादि पठित्वांतःपटं निःसार्य ॐ पुण्येत्युक्त्वा संकल्प पूर्वकं सालंकारां वस्त्रयुग्मवेष्टितां तुलसीं
हरये प्रतिपाद्य यदाबध्नेति मंत्रेणोभयोः कंकणं बध्वा आजंददादितिमंत्रेण करग्रहं कृत्वा आचार्यो वेदिकायां पाकयज्ञविधानेन अग्निं प्रतिष्ठाप्य
ष्य तुलसी विवाह होमे देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य अत्र प्रधानं विष्णुं त्रयोदशाक्षरमंत्रेणाष्टादशाक्षरेण वा नव वाज्याहु ती-
र्यक्ष्ये शेषेण स्विष्टकृदादि ततो यजमानश्चतस्रः प्रदक्षिणाः कृत्वा शांति पाठादि पठित्वा तूर्यादि घोषपूर्वकं यथाविभवं विष्णुं तुलसीं च संपूज्य
पीठं गां चाचार्याय ऋत्विग्भ्यो दक्षिणां च दत्वा ब्राह्मणान्भोजयेदिति अथ तुलसीपूजनं विष्णुधर्मोक्तं विलिख्यते तुलसीमंगणे वेदिकायां रोपयि-

त्वापूजयेत् अभीष्टसिद्ध्यर्थंतुलसीपूजांकरिष्ये ततःकलशंसंपूज्यध्यायेत् ध्यायामितुलसींदेवीं श्यामांकमललोचनाम् प्रसन्नांपद्मक
ल्हारवराभय चतुर्भुजाम् किरीटहारकेयूरकुंडलादिविभूषिताम् धवलांशुकसंयुक्तां पद्मासननिषेदुषीम् ध्यानं भगवत्यैतुलस्यैन॰ आवा
हनं॰ विष्णुवल्लभायै॰ आसनं॰ सर्वदेवमयायै॰ पाद्यं॰ सर्वतीर्थमयायै॰ अर्घ्यं॰ दैत्यांतकप्रियायै॰ आचमनीयं॰ सर्वलोकहितायै॰ स्नानं॰
लक्ष्मीसहोदरायै॰ वस्त्रं॰ महादेव्यै॰ गंधं॰ रमावासायै॰ पुष्पं॰ अभीष्टदायै॰ धूपं॰ पापहारिण्यै॰ दीपं॰ भगवत्यै॰ नैवेद्यं॰ अमृतसंभूतायै॰ तां
बूलं॰ अमृतरूपिण्यै॰ दक्षिणां॰ जगद्धात्र्यै॰ नीराजनम्॰ रुद्रदक्षिणायै॰ प्रदक्षिणां॰ परमेश्वर्यै॰ नमस्कारं॰ अभीष्टदायै॰ प्रार्थनाम् ततःतु
लसीमंत्रमष्टोत्तरशतंयथाशक्तिवाजपेत् तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे नमस्तेनारदनुतेनारायणमनःप्रिये ततःस्कंदोक्तंतुलसीकवचं
पठेत् अस्यश्रीतुलसीकवचस्य विष्णुर्ऋषिः अनुष्टुप्छंदः तुलसीदेवता अभीष्टसिद्ध्यर्थेजपेविनियोगः तुलसीमेशिरःपातु भालंपंकजधा
रिणी दृशौमेपद्मनयनाश्रीसखीश्रवणेमम घ्राणंसुगंधामेपातुमुखंचसुमुखीमम जिह्वांमेपातुशुभदा कंठंविद्यामयीमम स्कंधौकल्हारि
णीपातु भुजौमेपापहारिणी करौपद्मकरापातु हृदयंविष्णुवल्लभा पुण्यदामध्यंपातुनाभिंसौभाग्यदायिनी कटींकुंडलिनीपातु ऊरूनारदवंदिता
जननीजानुनीपातु जंघेसकलवंदिता नारायणप्रियापातु सर्वांगंसर्वरक्षका संकटेविषमेदुर्गेभयेवादमहाहवे नित्यन्हिसंध्ययोःपातु तुलसीस
र्वतःसदा इतीदंपरमंगुह्यं तुलस्याःकवचंमुदा तुलसीकाननेतिष्ठन्त्वासीनोवाजपेदिदम् सर्वान्कामानवाप्नोति विष्णुसायुज्यमृ-
च्छति ·इतितुलसीकवचम् अथधात्रीव्रतम् विष्णुधर्मोत्तरे तत्रविधिः आश्विनपौर्णमासीमारभ्य कार्तिकपौर्णमासीपर्यंतक

र्व्यम् अशक्ताव तिमंदिनत्रयं पूर्णिमायां वा कार्यम् तिथ्यादि संकीर्त्य ममाखिलपापक्षयपूर्वकं चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्री
त्यर्थं धात्रीमूले विष्णुपूजां च करिष्ये इति संकल्प्य धात्र्या आलवालं कृत्वा तन्मूले पञ्चरंगोपेतां वेदिकां कृत्वा तत्र विष्णुं संस्थाप्य पूजयेत् शांता
कारं भुजगशयनमिति ध्यात्वा पुरुषसूक्तेन पूजयेत् धूपात्प्रागंगपूजा दामोदराय॰ पादौ पू॰ केशवाय॰ कटी पू॰ नारायणाय॰ उदरं पू॰ वामनाय॰
कंठं पू॰ श्रीधराय॰ बाहू॰ गोविंदाय॰ मुखं॰ सहस्राक्षाय॰ नेत्रे पू॰ सर्वेश्वराय॰ ललाटं पू॰ विष्णवे॰ शिरः॰ त्रिविक्रमाय॰ सर्वांगं पू॰ नमस्कारानंत
रं विशेषार्घ्यं पुष्पश्रीफलसंयुक्तं दद्यात् तत्र मंत्रः नमः सहस्रशीर्षाय सहस्राक्षाय ते नमः नमस्ते सहस्रपदे पुरुषाय नमोऽस्तु ते सहस्रनाम्ने
देवेश प्रसीद त्वं ममाच्युत अर्घ्यं गृहाण भगवन् सर्वकामप्रदो भव ततः प्रार्थयेत् भगवन्देवदेवेश लोकनाथ जगत्पते अक्षया संततिर्मेऽस्तु दामो
दर नमोऽस्तु ते ततो धात्र्यै नम इति नाममंत्रेण षोडशोपचारैः धात्रीं संपूज्य अथवा षोडशनामभिः षोडशोपचारान्कल्पयेत् शांत्यै॰ कांत्यै॰ मे-
धायै॰ प्रकृत्यै॰ विष्णुपत्न्यै॰ महालक्ष्म्यै॰ रमायै॰ कमलायै॰ इंदिरायै॰ कल्याण्यै॰ कमनीयायै॰ सावित्र्यै॰ जगद्धात्र्यै॰ गायत्र्यै॰ धृत्यै॰ अ
व्यक्तायै॰ गन्धोत्तरमंगपूजा विश्वरूपायै नमः पादौ पू॰ स्वरूपायै॰ कटी॰ अब्धिसंभवायै॰ हृदयम्॰ लोकमात्रे॰ मुखं॰ धात्र्यै॰ शिरः॰ एवं सं
पूज्य ततोऽष्टदिक्षु दीपान् बलिं धात्र्यै नम इति दत्त्वा तथैवाष्टकृत्वः सूत्रेण वेष्टयित्वाष्टकृत्वः प्रदक्षिणाः नमस्कारांश्च कृत्वा प्रार्थयेत् धात्रीदेवि
नमस्तुभ्यं सर्वपापक्षयंकरि वर्चस्वं कुरु मां देवि धनवंतं तथा कुरु पुत्रान् पौत्रान् बलं प्रज्ञां देहि मे जगदीश्वरि संवत्सरकृतं पापं दूरीकुरु ममाक्षये
ततो धात्रीमूले सव्येनैव तर्पयेत् पिता पितामहश्चान्ये अपुत्रा ये च गोत्रिणः वृक्षयोनिगता ये च ये च कीटत्वमागताः तिर्यग्योनिगता ये च ये चत्र-

ग्रं· ७३

ह्मांडमध्यगाः पिशाचत्वंगतायेच येचप्रेतत्वमागताः तेपिबंतु मयादत्तं धात्रीमूले क्षयंपयः तेसर्वे तृप्तिमायांतु धात्रीमूले निषेचनात् एवंप्रत्यहं-
मासपर्यंतं कृत्वा अंते उद्यापनविधिना मंडले सौवर्णीं धात्रीं मूले हैमं विष्णुं पूर्ववत्संपूज्य घृताक्त तिलैरष्टोत्तर शतं पृथक् पृथक् तत्तन्मंत्राभ्यां हुत्वा-
चार्याय पीठं व्रतपूर्तये गां च दत्वा सर्वसंपूर्णतासिद्ध्यै सुवर्णयुक्तं घृतपूरितं कांस्यपात्रं दद्यात् तत्रमंत्रः कांस्यं ब्रह्ममयं प्रोक्तमाज्यं भोज्यं दिवौकसाम्
सुवर्णमग्निदैवत्यमतः शांतिं प्रयच्छ मे ततो द्विजान्संभोज्य आशिषो गृहीत्वा स्वयं भुंजीत इति श्रीमुच्चित्तपावन॰ व्रतोद्यापनकौमुद्यां तु
लसीविवाहविधानं धात्रीविधानं च समाप्तम् अथ ध्वजारोपणं बृहन्नारदीये यः कुर्याद्विष्णुभवने ध्वजारोपणमुत्तमम् संपूज्यते-
:किमन्यद्बहु भाषितम् सर्वपापहरं कर्म ध्वजारोपणसंज्ञितम् महापातकयुक्तोपि युक्तो वा सर्वपातकैः ध्वजं विष्णुगृहे कृत्वा सर्व
पापैः प्रमुच्यते यावद्दिनानि वसति ध्वजो विष्णुगृहे द्विजाः तावद्युगसहस्राणि हरिसारूप्यमश्नुते स्वारोपितं ध्वजं विष्णुगृहे धूनोति यः पुमा
तस्य सर्वाणि धुन्वंति पापानि निमिषार्द्धत इति तत्र विधिः कार्तिकासित दशम्यां नियमान्वितः एकादश्यामुपोषितः विष्णुः स्मरण
तत्परः द्वादश्यां प्रातर्यथाविधि स्नात्वा नित्यकर्म निर्वर्त्य संकल्पं कुर्यात् तिथ्यादि संकीर्त्य अशेषपापौघक्षयद्वारा सकलाभीष्टसिद्धिपू
र्वक विष्णुसारूप्यकामो विष्णुद्वारे ध्वजारोपणं करिष्ये पुण्याहवाचनादि कृत्वा आचार्यं चतुरो ऋत्विजश्च वृत्वा तैः सहदे
वं पुरुषसूक्तेन संपूज्य ततोत्सुक्त ध्वजस्तंभौ गायत्र्या प्रोक्ष्य ध्वजपुतौ कृत्वा तत्र सूर्यं वैनतेयं हिमांशुं धातारं विधातारं च नाममंत्रैरावा-
ह्य संपूज्य च ध्वजौ हरिद्राक्षतगंधपुष्पादिभिर्भूषयित्वा शुद्धभूमौ स्थंडिले अग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधानम् विष्णुं ३

कौ॰ ७३

शतं पायसाहुतिभिः सूर्यं वैनतेय हिमांशुं धातारं विधातारं चाष्टाष्टसंख्यया पायसाज्याहुतिभिः शेषेणास्विष्टकृतमित्यादि विष्णुहोममंत्राः
षोडशर्चं पुरुषसूक्तं इरावती इति प्रतिद्रव्यमष्टादशभिर्मंत्रैः षोडशावृत्त्याहोमयेत् उदुत्यंजातवेदसमिति सूर्यस्य साम ध्वनिशरीरस्त्वमिति
गरुडस्य सोमो धेनुमिति हिमांशोः धातुर्धातादधातु नो रयिमीशानो जगतस्पतिः सनः पूर्णेनवावनत् विधातुः योनः पिताजनितायोवि-
धाता यो नः सतो अभ्यासज्जजान इति ततः सौरमन्त्रान् शांतिसूक्तानि च पठित्वा जागरणादिना रात्रिं निनयेत् प्रातर्देवं संपूज्य ततः सूक्तपाठैः
स्तोत्रपठनैर्नृत्यमंगलवाद्यघोषैः सह देवं प्रदक्षिणीकृत्य देवालयं ध्वजावानीय देवस्य द्वारदेशे शिखरे वा सुस्थिरीकृत्वा ध्रुवसूक्तं पठित्वा तं-
संपूज्य पुनर्देवालये देवं विशेषेण संपूज्य इदं स्तोत्रं पठेत् सूत उवाच नमस्ते पुंडरीकाक्ष नमस्ते विश्वभावन नमस्तेस्तु हृषीकेश महापु-
रुष पूर्वज यत्रेदमखिलं जातं यत्र सर्वं प्रतिष्ठितम् लयमेष्यति यत्रैतत्तं प्रपन्नोस्मि केशवम् नजानंति परं भावं यत्र ब्रह्मादयः सुराः योगिनो
यं न पश्यंति तं वंदे ईशरूपिणम् अंतरिक्षं तु यन्नाभिर्द्यौर्मूर्धा यस्य चैव हि पृथिवी यस्य पादौ च तं वंदे विष्णुरूपिणम् यस्य श्रोत्रे दिशः स-
र्वा यच्चक्षुर्दिनकृच्छशी ऋक्सामयजुषो नेति तं वंदे ब्रह्मरूपिणं यन्मुखाद्ब्राह्मणा जाता यद्बाहोरभवन्नृपाः वैश्या यस्योरुतो जाताः प-
द्भ्यां शूद्रोऽभ्यजायत मायासंगममात्रेण पुरुषं यं वदंति हि स्वभावविमलं शुद्धं निर्विकारं निरंजनम् एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः
त्रीन्लोकान्व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः योदेवः सर्वभूतानामंतरात्मा जगन्मयः निर्गुणः परमानंदः स मे विष्णुः प्रसीदतु
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु परेशः परमानंदः परात्परतरः प्रभुः चिद्रूपश्च सवि-

यइदंकीर्तयेन्नित्यं स्तोत्राणा
ज्ञेयः समेविष्णुः प्रसीदतु ज्ञानिनांकर्मिणांचैव तथाभक्तिमतांनृणाम् गतिदानाविश्वगम्यः समेविष्णुः प्रसी० आशिषोगृहीत्वा भुंजीत ए
मुत्तमोत्तमम् सर्वपापविनिर्मुक्तः परंसायुज्यमाप्नुयादिति ततोद्वादशब्राह्मणान् संभोज्य दक्षिणादिनामनोध्य अथकार्तिकादिमासव्रतोद्यापनं
वमेवशिवादीनां तत्रगरुडस्थाने वृषभः अन्यत्समानं होमेपौरुषं त्र्यंबकं कद्रुद्रायेति इतिध्वजारोपणम् विविधसुखप्राप्तिद्वारा
पाद्मे आदौमध्ये अंते पूर्णिमायांवा कार्यम् तिथ्यादिसंकीर्त्य आत्मनः सकल पापनाशन पूर्वकमैहिकामुष्मिक प्रमाणेयथा
श्रीपरमेश्वरप्रीत्यर्थं कृतंयत्कार्तिकादिमासस्नानं तत्संपूर्णफलावाप्तये तदुद्यापनंकरिष्य इतिसंकल्प्य वृताचार्यस्त्रिंशद्दंड प्रमाणेयथा
शक्तिवा कृते मंडपे पंचरंगोपेत मंडलेब्रम्हादिदेवतास्थापन पूर्वककलशंहैमंरौप्यंताम्रंवा षोडशपलमितंप्रतिष्ठाप्य तत्रपूर्णपात्रेष्टदले कर्षमा
त्रंतदर्धं तदर्धंवा हैमंलक्ष्म्यायुतंदामोदरं इदंविष्णुरितिमन्त्रेण प्रतिष्ठाप्यपुरतोगरुडं परितोलोकेशानावाह्य पुरुषसूक्तेन संपूज्य स्तोत्रैः स्तुत्वाजा
गरादिनारात्रिंनिनयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानम् लक्ष्म्यायुतंदामोदरं साज्ययवमिश्रितिलाश्वत्थ समिद्धृत पंचखा
द्यद्रव्यचतुष्टेनाष्टोत्तरसहस्राहुतिभिः परिवारदेवताः ब्रम्हादिदेवताश्च दशदशतिलाहुतिभिर्यक्ष्ये ततआचार्यायपीठं दद्यात् तत्रमंत्रः
दामोदर सलक्ष्मीक सुप्रतीकजनार्दन त्वंमांमोचय पापाद्धे नवमूर्तिप्रदोयतः अधिकफलावाप्तयेसोपस्करांशय्यांगांचदत्वानंतरंत्रिंशदेकंवापक्वा-
न्नपूरितंकांस्यपात्रंसदक्षिणंदद्यात् तत्रमंत्रः कांस्यंविष्णुमयंप्रोक्तं पक्वान्नैःपरिपूरितं ब्राम्हणाय प्रदास्यामि केशवः प्रीयतामिति ततोब्राम्हणान्-
सदन्नेनसंभोज्यदक्षिणांदत्वाऽशिषोगृहीत्वाबंधुजनैःसह भुंजीत एवमेवमाघवैशाखयोः माघेतुमाधवोदेवोवैशाखेमधुसूदनः इतिकार्तिकादिमासोद्याप०

अथत्रिपुरविधिः पाद्मे कार्तिकमासपर्यंतंप्रत्यहंदीपदानंकृत्वा अंतेपूर्णिमायांत्रिपुरंज्वालयेत् तत्रविधिः पौर्णिमास्यांसायंकालेदेव एवं
लस्यावा अग्रेभागे अन्यत्रवायत्रकुत्रापिस्थलेमृदावेदिकांनिर्माय तत्रकंदर्पंपूजयेत् तद्यथा तिथ्यादिसंकीर्त्याभीष्टसिद्धिद्वाराश्रीप
प्रीत्यर्थंत्रिपुरप्रज्वलनंकरिष्येइतिसंकल्प्य अक्षतपुंजेगणेशंशंभुंचसंपूज्यवेदिकायांअष्टदले ताम्रपात्रेकलशेद्विभुजंहेमंकंदर्पनाममंत्रेण
स्थाप्यपट्टकूलेनसंछाद्यपंचामृतस्नानपूर्वकंविष्णुमंत्रेणषोडशोपचारैः पूजयेत् ततआज्येनतिलतैलेनवात्रिपुरपूजापुरस्सरंप्रज्वालयेत् तत्रमंत्रः
टाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्वपचाहिविप्राः दीपमंत्रः आज्येनवर्तिसंयुक्तं
रंवह्नियोजितम् गृह्यकंदर्पदेवेशप्रीतोभवसमाहितः तदानींतूर्यादिघोषः कर्तव्यः ततोदह्यमानेत्रिपुरेप्रदक्षिणात्रयंकुर्यात् ततआचार्यंसंपू
कंदर्पमूर्तिंदत्वा गांचदत्वाद्विजेभ्योदक्षिणांदत्वाबंदिजनान्तोषयेत् इतित्रिपुरविधिः अथव्यासपूजनम् पाद्मे आषाढ्यांकार्तिक्यांवा कार्यं
थ्यादिसंकीर्त्य ममेहजन्मनिजन्मांतरेवाचतुर्दशविद्याधिगमनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंव्यासपूजांकरिष्यइतिसंकल्प्य गणेशपूजादिविधाय
वालयेमठेवापीठेमध्यभागेनारायणस्वरूपिणंव्यासंपूर्वादिषु पैलंवैशंपायनंजैमिनिंसुमंतुंपुरतः शुकंपरितः सप्तऋषीन्गुरुंपरमेष्ठिगुरुंपरात्परं
रुंसंपूज्यानंतंकूर्मंपृथिवींपंचोपचारैः संपूज्यततोयतीन् कौपीनाच्छादनादिनाप्रपूज्यद्विजेभ्योदक्षिणांदत्वा आशिषोगृहीत्वानमेत् इतिश्रीम
त्° व्रतोद्यापनकौमुद्यांकार्तिकादिमासस्नानोद्यापनध्वजारोपणत्रिपुरदीपनव्यासपूजनविधानानिसमाप्तानि अथअश्वत्थोद्यापनंतदुक्तंशौन
ये स्थापनादष्टमेवर्षेद्वादशैकादशेपिवा उत्तरायणेगुरुशुक्रोदयेमाघफाल्गुनचैत्रवैशाखेषुशुक्लपक्षेशुभनक्षत्रवारतिथिलग्नके स्कंध

णांकुरान्विते विद्युता दावाग्निना वानभिहिते ऽश्वत्थे सत्यश्वत्थोद्यापनं कुर्यात् तत्रादौ कनककुंडले कनकसूत्रे कनकमौंजी होमद्रव्यादि सर्वसंभा
यथासंभवं संभृत्य अश्वत्थस्य चतुरस्रां वेदिकां विधायाश्वत्थमूले वर्तुलं चतुरस्रं वा ऽलवालं कृत्वा तत्र तुलसीप्लक्षशाखाशमींश्च रोपयित्वाश्वत्थवेदिव
चतुरस्रं समंताच्च चतुर्द्वारं चतुर्हस्तं अधिकं वा मंडपं अश्वत्थात्पूर्वे पश्चिमे उत्तरे वोक्तलक्षणं मंडपं कृत्वा स्वगृहे ज्योतिर्विदा दिष्टे मुहूर्ते प्रधानसंकल
यात् तद्यथा तिथ्यादि संकीर्त्य आत्मनो ऽखिलपापक्षयद्वाराभीष्टसिद्धिपूर्वकं आत्मना सहैकविंशतिपुरुषानुद्धर्तुकामः श्रीपरमेश्वर
त्यर्थमश्वत्थोद्यापन तथा ऽश्वत्थस्याभीष्टसिद्धिदातृत्वार्थं तदुपनयनं करिष्ये तदंगविहितं गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं
र्यादिवरणं च करिष्ये इति संकल्प्य स्वगृह्यविधिना तानि कृत्वा आचार्यादीन् वृणुयात् अस्मिन्कर्मणि आचार्यं त्वामहं वृणे वृतोऽस्मि इति वदेत्
ब्रह्माणं सदस्यं उपद्रष्टारं वृत्वा सर्वान् मधुपर्कादिना संपूज्य प्रार्थयेत् अस्य यागस्य निष्पत्तौ भवंतो ऽभ्यर्थिता मया सुप्रसन्नैश्च कर्तव्यं कर्मेदं विधि
ततः स्वगृहे एव ग्रहमखादि विधाय ततः सऋत्विक् सपत्नीको यजमानः संपूर्णकलशहस्तः भद्रं कर्णेभिरिति मंत्रेण मंगल
श्वत्थ प्रादक्षिण्येन मंडपपश्चिमद्वारमागत्य तत्र धरां संपूज्य मंडपं प्रविश्य कलशमश्वत्थसमीपे निधाय निर्ऋति वरुणयोर्मध्ये उप
ततः आचार्यः आचार्यकर्म करिष्ये इति संकल्प्य शरीरशुद्ध्यर्थं भूतशुद्ध्यादि यो रुषजपं च कृत्वा यदत्र संस्थितं मिति
आपो हि ष्ठेति उत्तरनारायणेन च कार्यं ततो देवा अम्
पलाजान्विकीर्य साधितपंचगव्येन कुशैः सर्वत्र प्रोक्षणं २
ततो यथोक्तमंडपकरणे मत्कृततरुद्रानुष्ठानकौमुदीस्थोद्याप०

पपूजयेत्  साधारणमंडपेतु प्राग्द्वारे अमंत्रकं चूतपल्लवतोरणं दक्षिणे प्लक्षपल्लवतोरणं पश्चिमे वटपल्लवतोरणमुत्तरे अशोकपल्लवतोरणं एव पूर्वका
कृष्णाहरितपताका अश्वत्थशिरसि चित्रध्वजं च बध्वा तथैव प्रागादिद्वारचतुष्टये वेदादिक्रमेण द्वौ द्वावेकमेकं वा जपार्थं ब्राम्हणं वृणुयात्  तेन
श्वत्थस्य हरिद्रातैलरोपणादि लौकिकं विधाय अश्वत्थवेदिकायां ईशान्यप्रदेशे सर्वतोभद्रं विरच्य ब्रम्हादिदेवतास्थापनं करिष्य इति संकल्प्य उक्त
णसंस्थाप्य संपूज्य तदुपरि अक्षतपुंजे मध्यप्रदेशे कृताग्न्युत्तारण सौवर्णप्रतिमायाम् इदं विष्णुरिति मंत्रेण वासुदेवं तद्वामतः अघस्यायोषणेति मंत्रे
क्मिणीं तद्दक्षिणतः सत्यासत्येति मंत्रेण सत्यभामां  ततः प्रक्षोदसा धायसेति मंत्रेण सरस्वतीं  आतूनइंद्रेति गणपतिं चावाह्य पौरुषेण सूक्ते
पूज्य ततोऽश्वत्थपरितः पीठसमततो वा अष्टौ कलशान् स्थापनप्रकारेण संस्थाप्य तत्र पूर्वकलशे शुद्धोदकमापोहिष्ठेति नवर्चेन सूक्तेन द्वितीये गं ध
आनोभद्राइति दशर्चेन तृतीये क्षीरोदकं स्वस्तिनो मिमीतेति पंचर्चेन चतुर्थे पंचगव्यं शन्नइंद्राग्नीइति पंचदशर्चेन पंचमे हरिद्रोदकं एतोन्विंद्रेति क्र
षष्ठकलशे सर्वौषध्युदकं समुद्रज्येष्ठाइति चतसृभिः सप्तमे कुशोदकं  यादिव्याइति  अष्टमे कुशोदकं  प्रसुव आपइति नवर्चेन उक्तप्रकारेण पू
त्रांत कृत्वा  तत्र पूर्वादिक्रमेण इंद्रादीन् तत्तन्मंत्रैरावाह्य संपूजयेत्  ततोऽश्वत्थं पुरुषसूक्तेनाथर्वशिरसा च संशोध्य  पंचामृताभिषेकं च कृ
काषायवस्त्रयुग्मेन च सवेष्ट्य  ततः पूर्वादि दिक्षु चत्वारि स्थंडिलानि विधाय  तेषु होमार्थं च गुरु आचार्यान् वृत्वा ते स्वगृह्य विधिनाग्नीन् स्था
युः  अत्र केचन ईशान पूर्वयोर्मध्ये ग्रहहोमादिकं कर्तुं पंचममिच्छंति  बहव: पूर्वकुंडे एव ग्रहप्रधानहोमादिकं कुर्वंति  पूर्वमकृत ग्रहयज्ञ ई
न्यावेदिकायां मत्कृत रुद्रानुष्ठान कौमुदीस्थ प्रकारेण ग्रहानावाह्य संपूज्य अन्वादध्यात्  तत्र पूर्वकुंडे पूर्वकृत ग्रहयज्ञे सति आदित्यादिनवग्र

न्मुकसंरव्ययार्कादिसमिच्चर्वाज्यद्रव्यैः अधिदेवताप्रत्यधिदेवताश्च अमुकसंरव्ययातैरेवद्रव्यैः तथा आनो भद्रेतिमंत्रेण विश्वान्देवान् चरुद्र
व्योष्टोत्तरशतसंरव्यया तथा वासुदेवादि पीठदेवताः अश्वत्थसमिच्चर्वाज्यद्रव्यैः अष्टोत्तरशतसंरव्यया ब्रम्हादिदेवताः इंद्रादिलोकपालांश्चैकै
...ज्याहुत्या यक्ष्ये पंचमकुंड पक्षे आदौ पंचमकुंडे ग्निप्रणयनं ततश्चतुर्ष्वग्निप्रणयनं तत्र पंचमकुंडे ग्रहहोमः वासुदेवादीनां होमो ब्रह्म
दीनां च पूर्वकुंडे विश्वेदेवानां लोकपालानां च होम. अथ दक्षिणकुंडे गणपतिं तिलाज्यद्रव्येण अष्टोत्तरशतसंरव्यया यक्ष्ये पश्चिमे अष्टौ लोके
न् वास्तुं च शमीसमिद्भिः अष्टोत्तरशताष्टाविंशतिसंरव्यया वा यक्ष्ये उत्तरे नारायणं पौरुषेण सूक्तेन प्रत्यृचं आज्यद्रव्येणाष्टोत्तरशतसंरव्यया य
एवं तत्तन्मंत्रैर्होमं संपाद्य स्विष्टकृदादि बल्यंतं कृत्वाधिवसेत् पुराणादिना रात्रिं निनयेत् केचन काषायवस्त्रदानांतं कृत्वा परेद्युरेव होमादि कुर्व
न्ति प्रात पीठदेवताः संपूज्य अष्टकलशदेवता विसृज्य अष्टभिर्ब्राम्हणै स्नानं ग्राहयित्वा आचार्यः पवमानः सुवर्चन इत्यनुवाके
श्वत्थं त्रि. परिषिच्य किंचिदवशिष्टोदकान् कलशान् पूर्वस्थानेषु स्थापयेत् ततोऽयजमान आचार्यो वा ऽश्वत्थपश्चिमे स्थंडिले संस्कार
मं कुर्यात् तद्यथा अश्वत्थस्य पुंसवनादि समावर्तनांतान् संस्कारान् व्यात्हृति होरा करिष्ये इति संकल्प्य अग्निं पूवमानं
तिष्ठाप्यान्वादध्यात् अत्र प्रधानं अग्निं वायुं सूर्यं प्रजापतिं आज्यद्रव्येण प्रतिसंस्कारं चतुः चतुःसंरव्याकाहुतिभिर्यक्ष्ये
संस्कारहोमांते वनस्पते शतवल्शो इति मंत्रेण अश्वत्थं स्पृशेत् एवमुपनयनपर्यंतं कृत्वा यजमानाश्वत्थांतराले पटं
सुमुहूर्ते मंगलाष्टकपाठपुरः सरं तदेव लग्नमिति पठिते अंत. पटं निसार्य ध्रुवसूक्तं पठित्वा ये यज्ञेनेति वर्गपंचकं सोद्यापं॰

स्थमंत्रांश्च पठित्वा कौपीनं यज्ञोपवीतं कनकमयीं दर्भमयीं वा मेखलां दंडं च तत्तन्मत्रैर्धृत्वा सप्रणवां सव्याहृतिकां साशिरस्कां गायत्रीं भू
वत्पठेत् इत्युपनयनम् ततो महानाम्न्यादिसमावर्तनांतं कृत्वा कनककुंडलेलंकारांश्च दत्वा आयुष्यं वर्चस्व मिति पठित्वा मौंजीं विसृज्य शुक्ले
त्वा ममाग्नेइति सूक्तं पठेत् ततः स्विष्टकृदादिहोमशेषं समापयेत् अथ विवाहः तत्रादौ अश्वत्थालवाले शतकुंभमितं जलं क्षिप्त्वा दुग्धधारया तु
भैश्च सिक्त्वा वस्त्रयुग्मेन अश्वत्थतुलस्यादि शाखा वा वेष्टयित्वा तुलस्याः कंचुकीं वस्त्रं कंठभूषणं मौक्तिकं कर्णपादभूषणानि च दत्वा अश्वत्थे
विवाहविधिं करिष्य इति संकल्प्य पूर्वसंस्कारहोमस्थंडिलोत्तरप्रदेशे स्थंडिलं निर्माय योजकनामानमग्निं प्रतिष्ठाप्यान्वादध्यात् अत्र प्रधानं ब्रह्मा
णाद्वासुपर्णेति मंत्रेणाष्टोत्तरशतसंख्यया तिलाज्यद्रव्येण तथा महाव्याहृतिभिः तिलाज्यद्रव्येणाष्टोत्तरशतसंख्यया यक्ष्ये महाव्याहृतयस्तु भूरग्न
येच पृथिव्यै च महते च स्वाहा भुवो वायवे चांतरिक्षाय महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चंद्रमसे० हुते च स्विष्टकृदादि
एवं होमं कृत्वा तुलस्यश्वत्थयोः चतुरः शाखामयान् हस्तान् गृभ्णामीति मंत्रेण योजयेत् ततः स्विष्टकृदादिहोमशेषं समाप्य ततोऽश्वत्थं
रुषसूक्तेन षोडशोपचारैः संपूज्य अश्वत्थं तुलसीं च प्रार्थयेत् अश्वत्थ त्वं जगन्नाथः पुरा देवैर्विनिर्मितः पापात्संत्राहि नो देव पुण्यं देहि मह्यं नि
लम् क्षीरोदधिसमुद्भूते तुलसि हरवल्लभे अश्वत्थोद्यापनं पुण्यं मह्यं देहि श्रियै नमः ततः आचार्यः क्षेत्रपालबलिं दत्वा सर्वे आचार्याः स्वस्व
पूर्णाहुतिं हुत्वा कर्मशेषं समापयेयुः ततः यजमानः पीठपूजां विधाय कृतस्याश्वत्थोद्यापनस्य सांगतासिद्ध्यै आचार्यादिभ्यो दक्षिणा प्रदान
हं करिष्ये पूजापूर्वकं दत्वा ततः आचार्यादयः पूर्वस्थापिताष्टकलशोदकेन दूर्वापल्लवैः सपत्नीकयजमानमभिषिंचेयुः तत्र मंत्राः आनो भद्राः

प्र.
७७

तिदृशर्चसूक्त अस्यवामस्येतिद्विपंचाशदृचं सूक्तं मुंचामित्वेति पंचर्चसूक्तं समुद्रज्येष्ठाइत्यादयः सुरास्त्वामभिषिंचंतु इत्याद्याः एवमभिषिक्तो
यजमानः तिलकादिधृत्वा अग्निंपीठदेवतांश्चसंपूज्य उत्तिष्ठब्रह्मणस्पतइत्युत्थाप्यसोपस्करंपीठमाचार्याय दत्वासंपूर्णतासिद्ध्यै गांच
त्वा मंडपंसदस्याय आचार्यायवादत्वाभूयसींच दत्वा कर्मेश्वरार्पणंकृत्वा शताधिकान् ब्राह्मणान् संभोज्य आशिषोगृहीत्वाश्वत्थोद्यापन संपूर्ण
वाचयित्वा इष्टजनैःसह भुंजीत एवंयः कुरुते तस्यवर्धते श्रियमायुषम् कुलकोटीःसमुद्धृत्यविष्णुलोकेमहीयते इतिशौनकीयेअश्वत्थोद्यापनं
थवटोद्यापनंभविष्यस्कांदयोः उदगयने शुभमुहूर्ते स्थिरलग्नेचंद्रतारानुकूल्येरम्यप्रदेशेनाभिमात्रगर्तेगृहाणे प्रतिष्ठेतिमंत्रेणा वटपादपरोपण
र्यम् तद्वदेवसर्वपादपरोपणे रोपणादष्टमेवर्षे द्वादशेवाशाखापत्रयुक्ते उदगयनादिशुभेकाले उद्यापनं कुर्यात् वटस्यपरितश्चतुर्हस्तांवेदीं वे
कृत्वावटमूलेरम्यंचतुरस्रंवर्तुलंवा ऽलवालंकृत्वातत्रकांडात्कांडादितिदूर्वांरोपयेत् वटपरितश्चतुर्हस्तं पंचहस्तंवासु दृढंचतुर्द्वारमंडपंकु
सामर्थ्येसतिवटात्पूर्वे पश्चिमेउत्तरेवा यथोक्तप्रकारेण हवनार्थंनवपंचचतुःकुंडाद्युपेतं मंडपंकुर्यात् असामर्थ्येतुवटवेदिकायामेवतत्रप्रागा
चतुष्टयेआम्रोदुंबर प्लक्षाशोकपल्लव कृतानिचत्वारितोरणानि तथाद्वारचतुष्टयेश्वेत कृष्णाहरितपीतवर्णाः चत्वारोध्वजाः पताकाश्च त
रसिसर्ववर्णोध्वजःकार्यः एवंसंभृतसर्वसंभारोयजमानो ज्योतिर्विदादिष्टेशुभेमुहूर्तेप्रधानसंकल्पंकुर्यात् तद्यथा तिथ्यादिसंकी ७५
त्मनःसकलपापक्षयद्वारा कुलकोटिसमुद्धरणार्थं ऐहिकामुष्मिक निरवधिसुखप्राप्तिपूर्वकं ब्रम्हपदप्राप्तिकामो वटोद्यापनंतथापि०
त्वसिद्ध्यर्थं सर्वप्राणिसुखनिवासार्थंच वटसंस्कारंचकरिष्ये इतिसंकल्प्य तदंगविहितंगणपतिपूजनंपुण्याहवाचनंमातृकापूजं.

न्ह्माचार्यादिवरणंकरिष्ये स्वगृह्यविधिनातानि कृत्वाचार्यादीन्वृणुयात् अस्मिन्कर्मणि आचार्यं त्वा महं वृणे वृतोस्मीतिवदेत् एवं
स्यउपद्रष्टारंच वृत्वामधुपर्कादिनासंपूज्यप्रार्थयेत् अस्य यागस्यनिष्पत्तोभवंतोभ्यर्थितामया सुप्रसन्नैश्च कर्तव्यं कर्मेदं विधिपूर्वकं
ऋत्विग्यजमानः पूर्णकलशहस्तः मंगलवाद्यतूर्यघोषेण सह शाकुनसूक्त पठन् वटमंडपप्रादक्षिण्येन पश्चिमद्वारमागत्य तत्रभूमिभूः
मंत्रेणधरांसंपूज्य अर्घ्यदत्वा प्रविश्य वटसमीपे कलशान्निधाय वरुणनिर्ऋतिमध्येउपविशेत् ततः आचार्यः आचार्यकर्मकरिष्ये भूतशुद्धे
यमंडपातः गौरसर्षपलाजान्यदत्र संस्थितमितिविकीर्य साधितपंचगव्येनकुशैः आपोहिष्ठाइत्यादिमंत्रैः सर्वत्रप्रोक्षणंकृत्वा देवाआयांतु
नाअप्यांतुविष्णोदेवयजनंरक्षस्व ततःस्वस्त्ययनंतार्क्ष्यमितिपठेत् यथोक्तमंडपेउक्ततोरणपताकाध्वजान्बध्वाशांतिसूक्तजपार्थं
मेण द्वावेकंवाब्राम्हणं प्रागादिक्रमेण प्रतिद्वारंवृणुयात् ततआचार्योवटपश्चिमे चतुरस्रां वेदिकां निर्माय तत्र सर्वतोभद्रे उक्तप्रकारेण ब्रम्हा
नाआवाह्य तदुपरि अक्षतपुंजे कलशत्रयं प्रतिष्ठाप्य एकं वा तत्रमध्यमकुंभे ब्रम्हजज्ञानमितिब्रम्हाणं तद्दक्षिणे वषट्ते विष्णुरिति विष्णुं
बकमितिरुद्रं आग्नेय्यादिकोणेषु गणानांत्वेतिगणपतिं जातवेदसमितिदुर्गां जज्ञानमितिमातॄः क्षेत्रस्यपतेइतिक्षेत्रपालं ततः परि
शान् तत्तन्मंत्रैरावाह्य संपूज्य वेदीपरितोष्टौकलशान् स्थापनप्रकारेणसंस्थाप्य तत्र पूर्वादिकलशेषु पंचगव्यं सप्तमृदः पंचपल्लवान् चंदनं पंचरत्ना
सर्वौषध्योगंगोदकं एवं क्षिप्त्वा शुद्धजलेनापूर्य पूर्णपात्रंनिधाय तेषुइंद्रादीनावाह्य सपूजयेत् ततोहरिद्रातैलरोपणादिवटस्य कृत्वा वस्त्रेणावेष्ट
त्यधिवासनं परेद्युः प्रातर्नित्यकर्मनिर्वर्त्य पीठदेवताः संपूज्य प्रागादिद्वारचतुष्टये चतुरः कुंभान्संस्थाप्य तेषु उदकं पंचरत्न पल्लवादि च नि

ग्रं० ७८ इंद्रवरुणसोमान् तत्तन्मंत्रैरावाह्य पूज्य चतुर्द्वारेषु चतुर्वेदविदो द्विजाः शांतिसूक्तानि पठेयुः ततईशान्यां कुंडे स्थंडिले वा अग्निं प्रतिष्ठाप्य तदुत्त
दिक्यायमुक्तप्रकारेण ग्रहानावाह्य संपूज्य नदीशान्यां कलशं प्रतिष्ठाप्य जपार्थं ब्राह्मणान्वृणुयात् ततः प्रागाद्याचार्याश्चत्वारः स्वस्वकुंडे स्वकौ
त्थविधिना आचार्यकुंडात् श्रोत्रियागाराद्वा ऽग्नीन् प्रणीय ध्यायेयुः कुंडचतुष्टयपक्षे प्राक्कुंडादग्निप्रणयनं तत्रैव मुख्यहोमः अन्वा
तत्रेशानकुंडे ब्रह्मविष्णुरुद्रान् घृताक्तदूर्वाज्यद्रव्येणाष्टोत्तरशतमिताहुतिभिर्यक्ष्ये इंद्राद्यष्टौ लोकपालान् पलाशसमिच्चर्वाज्यद्रव्यै
ष्टाविंशतिसंख्यया यक्ष्ये दक्षिणे गणपतिं दुर्गां सप्तमातृः क्षेत्रपालं घृताक्ततिलद्रव्येणाष्टाविंशत्याहुतिभिर्यक्ष्ये पश्चिमे साधिप्रत्यधिदेव
त्यादिनवग्रहानर्कादिसमिच्चर्वाज्यतिलव्रीहिद्रव्यैः अष्टाविंशतिसंख्याकाहुतिभिर्यक्ष्ये उत्तरे सोमं सोमो धेनुमिति मंत्रेण घृताक्तचरुपू
द्रव्यैः अष्टोत्तरशतमिताहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये एवं तत्तन्मंत्रैः होमं संपाद्य ततः आचार्यो वटस्य हरिद्रातैलादि द
चोपचारैः संपूज्य पूर्वस्थापिताष्टकलशान् ब्राह्मणान् ग्राहयित्वा च आपोहिष्ठामयो० समुद्रज्येष्ठा० इमा आपः शि० एतो न्विंद्रं
त्येकं जपन् वटस्याभिषेकं कुर्यात् ततः आचार्यः प्रतीच्यां होमसंस्कारार्थं स्थंडिलं निर्माय संकल्पयेत् वटस्य पुंसवनादि विवाहांतान् सं
न् व्याहृतिद्वारा करिष्ये अग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधानं अग्निं वायुं सूर्यं प्रजापतिम् आज्यद्रव्येण प्रतिसंस्कारं चतसृ
तिभिर्यक्ष्ये प्रतिसंस्कारहोमांते वनस्पते शतवल्श इति मंत्रेण वटं स्पृशेत् एवमुपनयनपर्यंतं हुत्वा यजमान वटांतराले पटं धृत्वा मा
देवलग्नमिति पठिते अंतःपटं निःसार्य ध्रुवसूक्तं येयज्ञेनेति पठित्वा कौपीनं यज्ञोपवीतं मेखलां दंडं च तत्तन्मंत्रैर्दत्वा उपदेशवद्गायत्रीं ७५

मेत् ततोमहानाम्न्यादिसमावर्तनांतं कर्मकृत्वालंकारान्दत्वा आयुष्यंवर्चस्वमितिपठित्वा मौंजीं विसर्जयेत् ततोवटंच दूर्वांचदुग्ध
त्कावटंदूर्वांवस्त्रयुग्मेनसंवेष्ट्य वस्त्रकंचुकीमाभरणादि दत्वा पूर्ववद्धुत्वा गृभ्णामीतिमंत्रेणवटदूर्वयोः पल्लवमयान् हस्तान्योजयेत्
स्कारसबंधिस्विष्टकृदादिहोमशेषसमाप्य वटं पुरुषसूक्तेनसंपूज्य प्रार्थयेत् आदितोब्रह्मरूपाय मध्यतो विष्णुरूपिणे अग्रतोरु
वटवृक्षायतेनमः अकारमूलरूपाय उकारस्कंधशाखिने मकारफलपुष्पाय वटवृक्षायतेनमः तत आचार्याः स्वस्वकुंडे स्विष्टकृदा
ग्लिपूर्णाहुतिंच कृत्वा यजमानो वटोद्यापनसांगतासिद्ध्यर्थं दक्षिणांगांचदास्ये इतिसंकल्प्य क्रमेणदत्वा तत ऋत्विजः कलशोदकेन
समुद्रज्येष्ठा इत्यादिमंत्रैरभिषिच्य कर्मशेषंसमापयेयुः ततोयजमानः पीठदेवताः संपूज्य उत्तिष्ठ ब्रह्मणस्पत इति उत्थाप्य
गणाः सर्वे इति विसृज्य पीठादि आचार्यायदत्वा मंडपंसदस्याय दत्वा भूयसीं दत्वा शताधिकान् ब्राह्मणान् भोजयिष्ये इतिसंक
यदन्नेनसंभोज्य आशिषोगृहीत्वा वटोद्यापनपूर्णतां वाचयित्वा इष्टजनैः सह भुंजीत इत्यश्वत्थवटोद्यापनम् इतिश्रीमा
नकुलाब्धिसंभवधारे इत्युपनामक बल्लाळसूरिसूनुशंकरविरचिता व्रतोद्यापनकौमुदीसमाप्ता शुभंभवतु श्रीकृष्णार्पणमस्तु

व्रतोद्यापनकौमुदी श्रीकृष्णगुप्ततनय गंगाविष्णुना मुंबापुनगरे श्रीवेंकटेश्वराख्ययंत्रालये शिलाक्षरैर्मुद्रिता संवत्
१९३८ श्रावणकृष्णपक्षे गुरुवारान्वित तृतीयायाम्.

